श्रीः ।

–*–

आनन्दवनविद्योतिसुमनोभिः सुसंस्कृता ।
सुवर्णाऽङ्कितभव्याभशतपत्त्रपरिष्कृता ॥ १ ॥
चौखम्बा-संस्कृतग्रन्थमाला मञ्जुलदर्शना ।
रसिकालिकुलं कुर्यादमन्दामोदमोहितम् ॥ २ ॥

स्तबकः—३९

॥ श्रीः ॥

# विभक्त्यर्थनिर्णयः ।

श्रीगणेशाय नमः ।

बहुविधरूपपरिग्रहजगदभिनाटनमिहाकाङ्क्षन् ।
स्वयमपि नटति सुकुतुकी यस्तस्मै शंभवेऽस्तु नमः॥१॥
ध्रुवोऽपाये कर्मेप्सितफलहितः साधकतमः
सदाधारोऽभीष्टः परफलकभावेन जगताम् ॥
स्वतन्त्रः कर्तासि स्फुटवलयशेषः प्रथमया
सुलिङ्गख्यातस्त्वं विशदय विभक्ती गिरिश ताः ॥२॥

इह खलु सर्वेषां विभक्त्यर्थानां भगवत्यन्वय इति विभक्त्यर्थो निरूप्यते । तत्र कारकाकारकभेदात्स द्वेधा । ननु कारकत्वस्यानुगतत्वाभावेन न तेन रूपेण विभक्त्यर्थता कारकाणां प्रातिस्विकरूपेण तदर्थत्वे द्वेधा विभागो ऽनुपपन्नः । न च क्रियान्वयित्वरूपं कारकत्वं नाननुगतमिति वाच्यम् । कुमार्य इव कान्तस्य त्रस्यन्ति स्पृहयन्ति चेत्यादौ षष्ठ्यर्थशेषस्यापि क्रियान्वयित्वात्तत्रातिव्याप्तेः । न च षष्ठ्यर्थभिन्नत्वमपि विशेषणमिति वाच्यम् । तथा सति तण्डुलस्य पाक इत्यादौ षष्ठ्यर्थस्याकारकत्वापत्तेः । अथ कर्तृकर्मणोः कृतीति सूत्रविहितषष्ठ्याः कारकार्थकत्वेन तण्डुलस्य पाक इत्यादौ षष्ठ्यर्थस्य कार-

कर्तृत्वेऽपि नाव्याप्तिः कृद्युक्तान्यषष्ठ्यर्थभिन्नत्वे सति क्रियान्वयित्वस्वरूपस्य कारकत्वस्य कारकलक्षणत्वेनाभ्युपगमाद्दर्शितषष्ठ्याः कृद्युक्तत्वेन तदर्थस्य निरुक्तकारकत्वानपायादिति चेन्न। सुराणां पातासावित्यादौ कृद्युक्तशेषषष्ठ्या अर्थेऽतिव्याप्तेस्तत्र निरुक्तकारकत्वस्य सत्त्वात्। न च धात्वर्थेतरान्वयायोग्यत्वमस्तु विशेषणं तथा च शेषषष्ठ्यर्थस्य धात्वर्थेतरस्मिन् राज्ञः पुरुष इत्यादौ पुरुषादावन्वयान्नातिव्याप्तिरिति वाच्यम्। एवं सति द्वितीयाद्यर्थकारकेऽव्याप्तेः। दण्डं दधातीत्यादौ यादृशोऽधिकरणादिर्द्वितीयार्थो धारणान्वयी तादृशस्यैवाधिकरणादेर्द्वितीयार्थस्यानुदण्डं जातिरित्यादौ जात्यन्वयात्। किञ्च धात्वर्थेतरान्वयायोग्यत्वं धात्वर्थेतरान्वययोग्यत्वमविज्ञाय दुर्ग्रहं तच्च कारकान्यत्वमेव तथा सत्यन्योन्याश्रयः स्यात् तादृशान्वयायोग्यत्वस्वरूपकारकत्वज्ञानस्य तादृशान्वययोग्यत्वरूपकारकान्यत्वज्ञानस्य च परस्पराधीनत्वात्। एतेन धात्वर्थान्वयायोग्यत्वं शेषत्वं शेषभिन्नत्वं कारकत्वमित्यपि परास्तम्। धात्वर्थान्वयायोग्यत्वस्य कारकत्वस्वरूपाग्रहे दुर्ग्रहत्वेनान्योन्याश्रयप्रसङ्गात्। किं च शेषत्वमपि नेदृशं भवति मम प्रतिभाति कान्तस्य त्रस्यतीत्यादौ शेषस्य धात्वर्थान्वयित्वात्। एतेन धात्वर्थान्वितसुबर्थत्वं कारकत्वं विभक्त्यर्थस्य विभक्त्यर्थद्वारकक्रियान्वयित्वं कारकत्वं विभक्तिप्रकृत्यर्थस्येत्यपि परास्तम्। दर्शितषष्ठ्या अर्थे प्रकृत्यर्थे चातिव्याप्तेः। यत्त्वपादानाद्यन्यतमत्वं कारकत्वं नातः क्वाप्यव्याप्त्यतिव्याप्ती इति तन्न अपादानत्वादेरपि क्वचित्षष्ठ्यर्थत्वात्। किं चापादानत्वादिकमपि नैकं ध्रुवत्वासोढत्वादिभेदेन बहुविधत्वात् इति

कथमुक्तान्यतमत्वं कारकत्वमिति । न च ध्रुवाद्यन्यतमत्वेनापादानादिं निरुच्य तावदन्यतमत्वं कारकत्वं निर्वाच्यमिति वाच्यम् । कतिपयापादानादिकं जानतां सकलापादानादिकमजानतां ध्रुवादौ कारकत्वग्रहानापत्तेः । प्रतियोगिज्ञानं विना यावदपादानादिभेदस्यैव दुर्ग्रहत्वेन तदन्यतमत्वस्य नितरां दुर्ग्रहत्वात् । न च तावदपादानादिवृत्तिगगनाभावादिव्यक्तिरेवान्यतमत्वं तस्य यत्किंचिदपादानादिग्रहेऽपि ग्रहसंभवादिति वाच्यम् । गगनाभावादिव्यक्तेस्तावदपादानादिवृत्तित्ववैशिष्ट्योक्तौ बीजाभावात् सर्वेषामेव कदा चित्क्व चित्कारकत्वेन तावद्वृत्तिगगनाभावादेरव्यावर्तकत्वात् व्याघ्राद्बिभेतीत्यादौ यादृशस्य हेतुत्वादेरपादानत्वं तादृशहेतुत्वादेर्व्याघ्रस्य भयमित्यादौ षष्ठ्यर्थत्वात् । एतेन तावदन्यतमत्वं कारकपदप्रवृत्तिनिमित्तमिति कारकपदवाच्यत्वमेव कारकत्वमिति निरस्तम् तावदन्यतमत्वस्य निर्वहनासहत्वादिति चेत् । उच्यते । नामार्थान्वयप्रयोजकतानवच्छेदकीभूतक्रियान्वयितावच्छेदकधर्मवत्त्वे सति पदान्तरासमभिव्याहृतसुबर्थत्वं कारकत्वं कान्तस्य वस्यतीत्यादौ षष्ठ्यर्थवारणाय भूतान्तं धर्मविशेषणम् । न च नामार्थान्वयाप्रयोजकत्वमेव तद्वारणार्थमस्तु किमनवच्छेदकत्वविवक्षयेति वाच्यम् व्याघ्राद्बिभेतीत्यादौ हेतुतादेः कारकस्याव्यापनात् व्याघ्रस्य भयमित्यादौ नामार्थान्वयित्वात् अनवच्छेदकत्वविवक्षणे तु तादृशस्य हेतुतात्वादेः सत्वान्नाव्याप्तिः तावतापि दर्शितषष्ठ्यर्थे ऽतिव्याप्तिः तत्र हेतुतादेः संबन्धत्वेन रूपेणान्वयात् संबन्धत्वस्य निरुक्तानवच्छेदकत्वविरहेऽपि तादृशस्य रूपान्तरस्य सत्त्वा-

दित्यवच्छेदकान्तं विशेषणं तेन भयहेतुतात्वादेरूपान्तरस्य प्रकृते क्रियान्वयितानवच्छेदकत्वात् शेषत्वेन भयहेतुतादेः कारकस्यान्वयेऽपि हेतुतात्वादिना ऽनन्वयात् अत एव कर्तृत्वादिकारकस्य कृदन्तार्थे कर्तृत्वत्वादिना ऽन्वयार्थं कर्तृकर्मणोः कृतीत्यादिपृथक्सूत्रारम्भसंगच्छते अन्यथा शेषत्वेन कारकस्य सर्वस्यान्वयसंभवे पृथक्सूत्रप्रणयनस्य वैयर्थ्यापत्तेः शेषत्वं तु संबन्धत्वं सप्रतियोगिकत्वं वेत्यन्यदेतदित्यादिकं षष्ठीविवरणे व्यक्तीभविष्यति कर्मादिपदोपात्तानां कर्मादीनां कारकत्ववारणाय सुबर्थत्वमुक्तम् तत्रापि दण्डं दधातीत्यादौ दण्डवृत्तित्वादिस्वरूपकर्मत्वस्यानुदण्डं जातिरित्यादौ नामार्थजातावन्वयात् कर्मकारके ऽव्याप्तिः स्यात्तद्वारणाय पदान्तरासमभिव्याहृतत्वं सुपो विशेषणम् दर्शितकर्मत्वादेर्नामार्थान्वये कर्मप्रवचनीयान्वादिपदसमभिव्याहारस्य तत्र सत्वात् अन्यथा दण्डं जातिरित्यादावपि तादृशान्वयबोधप्रसङ्गात्। नन्वेवमपि गेहे पचतीत्यादौ गेहवृत्तित्वस्य पाकान्वयित्वेन कारकत्वं तस्य गेहे घट इत्यादौ घटादिनामार्थे ऽन्वयान्निरुक्तकारकत्वविरहात्सप्तम्यर्थकारके ऽव्याप्तिः । न च कर्तृकर्मान्यतरघटितपरंपरासंसर्गावच्छिन्नवृत्तित्वस्यैव सप्तम्यर्थतया कारकत्वं तादृशवृत्तित्वस्य नामार्थेऽन्वयासंभवात् कथमव्याप्तिरिति वाच्यम् सप्तम्यधिकरणे चेति सूत्रेणाऽऽधेयत्वसामान्यस्यैव सप्तम्यर्थत्वेन प्रतिपादनाद्दर्शितपरंपराघटितवृत्तित्वस्य सप्तम्यर्थत्वेन प्रतिपादने गेहे घट इत्यादावाधेयत्वसामान्यस्यानानुशासनिकत्वापत्तेरिति चेद् ।मैवम्। दर्शितसूत्रेणाधेयत्वसामान्यस्य दर्शितपरंपरासंसर्गाव-

च्छिन्नाधेयत्वस्य च द्वयोर्योगविभागेन सप्तम्यर्थत्वप्रतिपादनात् । यद्वा यादृशसंसर्गेण क्रियायामन्वयस्तादृशसंसर्गेणैव नामार्थेऽन्वयो विवक्षितः एवमाधेयत्वसामान्यस्य सप्तम्यर्थत्वेऽपि न क्षतिस्तस्य दर्शितपरम्पराघटिताधेयत्वीयस्वरूपसम्बन्धेन क्रियायामन्वयात् नामार्थे तु संयोगाद्यवच्छिन्नाधेयत्वीयस्वरूपसम्बन्धेनेति दर्शितपरम्पराघटिताधेयत्वीयस्वरूपसम्बन्धेनान्वयसम्भवात्सप्तम्यर्थाधेयत्वकारके नाव्याप्तिः । नामार्थान्वयस्तु नामार्थविशेष्यकशाब्दबोधे बोध्यः अन्यथा सुपां लिङ्गसङ्ख्यातिरिक्तस्वार्थे प्रकृतिभूतनामार्थविशेषणकशाब्दजनकत्वनियमादसम्भवापत्तेः । तथापि गगनं न पश्यतीत्यादौ द्वितीयादेः स्वार्थविशेषणकनञर्थविशेष्यकबोधजनकत्वादव्याप्तिरिति नाम्नि निपातातिरिक्तत्वविशेषणम् । यदि तिङर्थकर्तृकर्मणोरपि कारकत्वं तदा न्यायमते तत्राव्याप्तिः तिङः प्रथमान्तार्थविशेष्यकशाब्दप्रयोजकत्वादिति विभाव्यते तदा नामार्थान्वयप्रयोजकतावच्छेदके तिङर्थतानवच्छेदकत्वं विशेषणम् । सुप्पदस्थाने विभक्तिपदं च बोध्यम् । शाब्दिकमते च नाव्याप्तिरतो न तद्विशेषणम् । ननु यदि क्रियायां नामार्थे चान्वये एकसंबन्धावच्छिन्नत्वं विशेषणम् तदा सप्तम्यर्थकारके ऽव्याप्तिर्दर्शितपरंपराघटिताधेयत्वीयसंसर्गेणाधेयत्वविषयकनामार्थविशेष्यकशब्दाप्रसिद्धेः तादृशसंसर्गकाधेयत्वविषयकशाब्दबोधौपयिकाकाङ्क्षाया नाम्नि विरहात् तथा च तादृशशाब्दप्रयोजकतानवच्छेदकत्वघटितलक्षणाप्रसिद्ध्या सर्वत्रैवासंभवः । षष्ठीं विना पदान्तरासमभिव्याहृतविभक्तौ नामर्थस्य क्रियान्व-

यघटकसंबन्धेन नामार्थेऽनन्वयादिति चेन्न । द्विविधाधेयत्वस्य सप्तम्यर्थत्वाभ्युपगमेन संबन्धविशेषानवच्छिन्नान्वयस्य लक्षणेऽप्रवेशात् । एकसंबन्धावच्छिन्नान्वयविवक्षणे तु क्रियानिरूपितसंबन्धावच्छिन्नप्रकारतानिरूपितविशेष्यतासंबन्धावच्छिन्नप्रतियोगिताकस्य नामार्थनिष्ठस्य शाब्दाभावस्य प्रयोजकतावच्छेदकत्वमेव नामार्थान्वयप्रयोजकतानवच्छेदकत्वं बोध्यम् । तादृशशाब्दाभावप्रयोजकतावच्छेदकत्वं विभक्त्यर्थतावच्छेदकापादानत्वत्वादौ संभवति । तथा हि । क्रियानिरूपितत्वोपलक्षिततत्संबन्धावच्छिन्नविभक्त्यर्थप्रकारतानिरूपितविशेष्यतासंबन्धेन शाब्दं प्रति नामजन्योपस्थिते विशेष्यतासंबन्धेन प्रतिबन्धकत्वं वक्तव्यम् । न च वृक्षात्पततीत्यादौ विभागासमवायिजनकत्वस्य पञ्चम्यर्थस्य पतनक्रियान्वयिनोऽन्वयेनामार्थस्यायोग्यत्वादेव वृक्षात्पर्णमित्यादौ शाब्दबोधो न भवति नामजन्योपस्थितेः प्रतिबन्धकत्वमयुक्तमिति वाच्यम् । क्वचिदयोग्यत्वेऽपि नामार्थस्य सर्वत्र तथात्वविरहात् वृक्षात्कर्मेत्यादौ योग्यतायाः सत्वाच्छाब्दापत्तिवारणाय दर्शितप्रतिबध्यप्रतिबन्धकभावावश्यकत्वात् । एवं क्रियान्वितापादानत्वाद्यर्थकतत्तद्विभक्तेर्नाम्ना समं नाकाङ्क्षत्वेन तादृशशाब्दाभावप्रयोजकनामनिराकाङ्क्षत्वाश्रयविभक्तिजन्योपस्थितिप्रकारकत्वात्मकतादृशशाब्दाभावप्रयोजकतावच्छेदकत्वस्वरूपनामार्थान्वयप्रयोजकतानवच्छेदकत्वं विभक्त्यर्थतावच्छेदके स्पष्टम् । एवं धातुसाकाङ्क्षविभक्तिजन्योपस्थितिप्रकारत्वस्वरूपं क्रियान्वयितावच्छेदकत्वमपि स्पष्टम् । तादृशसंबन्धावच्छिन्नविभक्त्यर्थप्रकारतानिरूपितविशेष्यतासं-

बन्धेन शाब्दं प्रति धातुजन्योपस्थितेर्विशेष्यतासंबन्धेन हेतुत्वात्। ईदृशहेतुहेतुमद्भावग्रहार्थमेव नामार्थोपस्थितेः प्रतिबन्धकत्वं प्रदर्शितम् न तु वास्तवम् धातुजन्योपस्थितेर्हेतुतयैवातिप्रसङ्गवारणसंभवात्। अत एव तण्डुलस्य पाक इत्यादौ नामजन्योपस्थितिसत्त्वेऽपि धातुजन्योपस्थितिबलात्तण्डुलकर्मताकः पाक इति शाब्दबोध उपपद्यते। न्यायमते दर्शितहेतुहेतुमद्भावे विभक्तौ तिङन्यत्वमपि विशेषणम्। एवं धातुभिन्ननिराकाङ्क्षताप्रयोजकार्थवद्भिन्ना तिङन्या या विभक्तिस्तद्भिन्नायाः पदान्तरासमभिव्याहृताया विभक्तेरर्थः कारकम्। अत्र पदान्तरासमभिव्याहारोऽपि विभक्तिस्वरूपशब्दधर्मतया धातुभिन्ननिराकाङ्क्षताप्रयोजको बोध्यः। अत्रार्थस्य निराकाङ्क्षताप्रयोजकत्वं विभक्त्यर्थतावच्छेदकरूपेण क्रियान्वयनिरूपकसंबन्धप्रतियोगित्वेन च बोध्यमतो न पूर्वोक्तोव्याप्तस्य दरम् भूतले घट इत्यादौ नामसाकाङ्क्षत्वेऽपि दोषः यदि पततीतिविनाकृताया वृक्षादिति पञ्चम्या अर्थोन कारकमिति मन्यते तदा धातुसमभिव्याहृतत्वं चरमविभक्तौ विशेषणं बोध्यम्। एवं कान्तस्य वसतीत्यादौ षष्ठ्यर्थशेषस्य नामनिराकाङ्क्षत्वप्रयोजकत्वान्न तत्र कर्मत्वेऽव्याप्तिः तिङन्यत्वविशेषणात्तिङर्थकर्तृत्वादौ नाव्याप्तिः पदान्तरासमभिव्याहृतत्वविशेषणाद्दण्डमनुजातिरित्यादौ द्वितीयार्थाधेयत्वे नातिव्याप्तिः। एवमीदृशसुप्तिङ्विभक्त्यर्थद्वारा नामार्थस्यापि कारकत्वं मन्तव्यम्। यदि च तिङर्थस्य न कारकत्वं मन्यते तदा धातुभिन्ननिराकाङ्क्षत्वप्रयोजकः पदान्तरासमभिव्याहृतस्य धातुसमभिव्याहृतसुपोऽर्थः कारकम्। अत्र धातुभिन्ननिराका-

कर्तृत्वप्रयोजकत्वं धातुभिन्नपदव्यतिरेकप्रयुक्तव्यतिरेकाप्रतियोगिस्वप्रकारकशाब्दसामान्यकत्वं तथाभूतसुबर्थस्य बोध्यम् । सामान्यपदोपादानात्कान्तस्य वस्यतीत्यादौ षष्ठ्यर्थस्य शेषस्य तादृशशाब्दप्रकारत्वेऽपि न तत्रातिव्याप्तिः । शेषप्रकारकशाब्दसामान्ये तादृशव्यतिरेकाप्रतियोगित्वविरहात् । कान्तस्य केश इत्यादौ धातुभिन्नपदेनापि शेषप्रकारकशाब्दजननात् । तण्डुलस्य पाक इत्यादौ षष्ठ्यर्थकर्मत्वादौ नाव्याप्तिः । कर्मत्वप्रकारकशाब्दसामान्यस्य तादृशव्यतिरेकाप्रतियोगित्वात् । धातुभिन्नपदेनकर्मत्वप्रकारकशाब्दाजननात् एवं स्वप्रकारता स्वार्थकसुबर्थतावच्छेदकरूपेण क्रियानिरूपितसंबन्धेन चावच्छिन्ना बोध्या तेन व्याघ्राद्बिभेतीत्यादौ पञ्चम्यर्थहेतुत्वस्य गेहे पचतीत्यादौ सप्तम्यर्थाधेयत्वस्य व्याघ्रस्य दरमित्यादौ भूतले घट इत्यादौ शेषत्वेन क्रियानिरूपकान्यसम्बन्धेन शाब्दप्रकारत्वेऽपि नाव्याप्तिः पञ्चम्यर्थतावच्छेदकहेतुतात्वेन क्रियानिरूपककर्तृकर्मान्यतरघटितपरम्परासंबन्धेन च दर्शितस्थले शाब्दप्रकारताया अनवच्छिन्नत्वात् । एवं सति तण्डुलं पचतीत्यादौ तण्डुलीया कर्मतेत्यवान्तरवाक्यार्थबोधस्य द्वितीयाप्रकृतिभूतधातुभिन्नतण्डुलादिपदव्यतिरेकप्रयुक्तव्यतिरेकप्रतियोगित्वेनासम्भवः स्यात् तद्वारणार्थं सुपात्तस्य स्वप्रकारकेत्यत्र प्रकारकत्वस्य निवेशो निष्प्रयोजन एव स्वविषयताकत्वनिवेशेनापि तद्वारणासम्भवात् विषयतायाः क्रियानिरूपकत्वोपलक्षिततत्तत्संबन्धावच्छिन्नत्वविशेषणात् । तण्डुलीया कर्मतेत्यत्र कर्मताया विशेष्यत्वेऽपि तस्य दर्शितसम्बन्धानव-

च्छिन्नत्वात् । न चैवं पश्य मृगो धावतीत्यादौ दृशिक्रियायां शाब्दिकमते धावनक्रियाया न्यायमते धावनकर्तृमृगादेर्वाक्यार्थस्य कर्मतासंसर्गेणान्वयात् तादृशवाक्यार्थबोधस्य निरुक्तव्यतिरेकाप्रतियोगित्वेन तद्विषयसंसर्गीभूतकर्मत्वेऽतिव्याप्तिरिति वाच्यम् । संसर्गीभूतकर्मत्वस्य सुबर्थत्वाभावात् । यदि च कर्मत्वादिकं न द्वितीयार्थः कर्मत्वादिसंसर्गकशाब्दे द्वितीयादिसमभिव्याहारस्तन्त्रमिति मतमाश्रीयते तदा पश्य मृगो धावतीत्यत्र कर्मत्वस्य कारकत्वमिष्टमेव । यदि तु नेष्यते तदा स्वविषयताकशाब्देसुप्समभिव्याहारप्रयोज्यत्वं विशेषणमित्यन्यदेतत् । एवं पदान्तरासमभिव्याहृतत्वं निरर्थकपदासमभिव्याहृतत्वं बोध्यम् । दण्डमनु जातिरित्यादावन्वादिपदस्य निरर्थकताया वक्ष्यमाणत्वात् । सुबर्थत्वावच्छेदकत्वमपि सुब्जन्योपस्थितिप्रकारत्वं बोध्यम् । तथा च निरर्थकपदसमभिव्याहारज्ञानाभावविशिष्टसुब्ज्ञानजन्योपस्थितिप्रकारीभवद्धर्मावच्छिन्नदर्शितस्वत्वावच्छिन्नप्रकारताकशाब्दसामान्ये निरुक्तव्यतिरेकाप्रतियोगित्वोपपत्तये पदान्तरासमभिव्याहृतसुबर्थत्वमुपात्तम् । पूर्वं च धातुविनाकृतसुबर्थस्य कारकत्ववारणाय धातुसमभिव्याहृतत्वं साकाङ्क्षत्वार्थकमुपात्तम् । इत्थं च धातुपदव्यतिरेकप्रयुक्तव्यतिरेकप्रतियोगित्वमेव निरुक्तशाब्दसामान्ये विशेषणं बोध्यम् । एतावतैव षष्ठ्यर्थशेषातिप्रसङ्गवारणसम्भवात् । तदयं समुदायार्थः धातुपदव्यतिरेकप्रयुक्तव्यतिरेकप्रतियोगिनिरर्थकपदसमभिव्याहारज्ञानाभावविशिष्टस्वार्थकसुब्ज्ञानजन्योपस्थितिप्रका-

रीभवद्धर्मावच्छिन्नक्रियानिरूपकत्वोपलक्षितसम्बन्धावच्छिन्नस्वप्रकारताकशाब्दसामान्यनिरूपकसुबर्थत्वं कारकत्वमिति । कान्तस्य केश इत्यादौ षष्ठ्यर्थशेषेऽतिव्याप्ति वारणाय प्रतियोग्यन्तं शाब्दविशेषणम् । तावतापि कान्तस्य वस्यतीत्य.दौ षष्ठ्यर्थशेषेऽतिव्याप्तितादवस्थ्यमिति सामान्यपदम् । शाब्दसामान्ये निरुक्तप्रतियोगित्वासम्भवस्स्यादिति शाब्दे स्वप्रकारताकत्वं विशेषणं तावतापि व्याघ्राद्बिभेतीत्यादौ पञ्चम्यर्थभयहेतुत्वादेर्व्याघ्रस्य दरमित्यादौ षष्ठ्यर्थशेषत्वेन शाब्दप्रकारतयाऽव्याप्तिरसम्भवो वा स्यादिति धर्मावच्छिन्नान्तं प्रकारताविशेषणम् । तावतापि शेषत्वस्य सुब्जन्योपस्थितिप्रकारतया सद्दोषतादवस्थ्यमिति स्वार्थकत्वं सुपो विशेषणम् । तत्रापि तादृशोपस्थितिप्रकारकरणत्वस्य शत्य इत्यादौ शाब्दप्रकारतावच्छेदकतया करणत्वेऽतिव्याप्तिरिति प्रकारपदं विहाय प्रकारीभवदित्युक्तम् । तदर्थस्तु सुबन्यज्ञानजन्योपस्थितिप्रकारत्वाभावविशिष्टं तादृशोपस्थितिप्रकारत्वमापन्नो बोध्यस्तादृशप्रकारत्वाभावस्तु सामानाधिकरण्यकालिकविशेषणताभ्यामवच्छिन्नप्रतियोगिताको बोध्यस्तेन शत्य इत्यादौ करणतात्वप्रकारतायाः सुबन्यतद्धितज्ञानजन्योपस्थितिप्रकारत्वेन स्वेनैव दर्शितोभयसम्बन्धेन विशिष्टत्वात् तदभाववैशिष्ट्यविरहान्नाव्याप्तिरिति । न च सुब्ज्ञानजन्योपस्थितिप्रकारत्वावच्छिन्न एव प्रकारीभवदित्यन्तेनोच्यतां तावतैव शत्य इत्यादौ शाब्दसम्भवेऽपि करणत्वे नाव्याप्तिस्तत्र करणतात्वप्रकारताकस्तद्धितप्रयोज्यत्वात् किं तादृशप्रकारतायां निरुक्तप्रकारत्वा-

भाववैशिष्ट्यनिवेशेनेति वाच्यम् । यत्र शतस्य इत्यादौ शतेनेति निराकाङ्क्षं केन चिदुक्तं तत्र तृतीयाजन्योपस्थितिप्रकारत्वापन्नकरणतात्वस्य शाब्दप्रकारतावच्छेदकत्वेनाव्याप्तिनादवस्थ्यान्निरुक्तप्रकारत्वाभाववैशिष्ट्यनिवेशे तु तृतीयाप्रयोज्यप्रकारताया लक्षितप्रयोज्यप्रकारत्वेन दर्शितोभयसंबन्धविशिष्टत्वात् निरुक्तप्रकारत्वाभाववैशिष्ट्यविरहाद्दर्शितस्थले शाब्दसम्भवेऽपि करणत्वेनाव्याप्तिरिति निरुक्तप्रकारत्वाभावप्रतियोगितायाः सामानाधिकरण्यमात्रावच्छिन्नत्वोक्तौ शतेन क्रीणातीत्यादौ करणत्वेऽव्याप्तिस्तत्र करणतात्वप्रकारतायाः सामानाधिकरण्येन तल्लक्षितप्रयोज्यप्रकारताविशिष्टत्वात् अतः कालिकविशेषणतावच्छिन्नत्वमपि तत्प्रतियोगितायामुक्तमेतावन्मात्रोक्तौ प्रकृत्यर्थतावच्छेदकप्रकारतया कालिकसंबन्धेन विशिष्टायाः सुप्प्रयोज्यतायाः सर्वत्रैव करणतात्वादौ सत्त्वान्निरुक्तप्रकारत्वाभावविशिष्टप्रकारताविरहादसम्भवः स्यादिति सामानाधिकरण्यावच्छिन्नत्वमपि प्रतियोगितायां निवेशितमिति। दण्डं दधातीत्यादौ दृष्टस्य दण्डकर्मत्वस्यानुरूपं जातिरित्यादौ द्वितीयाथतावच्छेदकाधेयतात्वेन शाब्दप्रकारत्वेन तत्राव्याप्तिरिति विशिष्टोक्तं सुबन्तानस्य विशेषणम् । न च निरर्थकपदासमभिव्याहृततया सुब्विशिष्यतां तावतैव दर्शिताव्याप्तिवारणसम्भवात् किं तादृशसमभिव्याहारज्ञानाभावस्य सुबन्ताने वैशिष्ट्यनिवेशनेनेति वाच्यम् । दण्डं जातिरित्यादौ तादृशसमभिव्याहारज्ञानवत्तात् शाब्दसम्भवेनोक्ताव्याप्त्यनुद्धारात् । न चैवमपि तादृशसमभि-

व्याहारज्ञानाविषयत्वं सुपो विशेषणमस्तु । दर्शितस्थले द्वितीयायास्तादृशसमभिव्याहारज्ञानविषयत्वात् । शाब्दसम्भवेऽप्यव्याप्तिसम्भवात् किं सुब्ज्ञाने तादृशज्ञानाभाववैशिष्ट्यनिवेशनेनेति वाच्यम् । यत्र दण्डो जातिरित्यादौ प्रथमायां तादृशसमभिव्याहृतद्वितीयात्वभ्रमस्तत्र शाब्दसम्भवे नोक्ताऽव्याप्तिसम्भवात्तत्र प्रथमायास्तादृशसमभिव्याहारज्ञानाविषयत्वात् । सुब्ज्ञाने तु तादृशसमभिव्याहारज्ञानाभाववैशिष्ट्यनिवेशनेऽव्याप्तिर्न भवति स्वविषयतावच्छेदकप्रकारकत्वसम्बन्धावच्छिन्नप्रतियोगिताकस्य तादृशसमभिव्याहारज्ञानाभावस्य सुब्ज्ञाने वैशिष्ट्यनिवेशात् । दण्डो जातिरित्यादौ प्रथमाज्ञाने तादृशसमभिव्याहारज्ञानस्य स्वविषयतावच्छेदकद्वितीयात्वप्रकारकत्वेन सम्बन्धेन तत्र तदभाववैशिष्ट्यविरहात् । एवं सति दण्डं दधातीत्यादौ द्वितीयाज्ञाने स्वविषयतावच्छेदकप्रकारकत्वसबन्धेन कालान्तरीयस्य पुरुषान्तरीयस्य तादृशसमभिव्याहारज्ञानाभावस्य सत्त्वेन तादृशज्ञानाभावविशिष्टस्वार्थकसुब्ज्ञानाप्रसिध्या दण्डकर्मत्वेऽव्याप्तिः स्यादिति तादृशसमभिव्याहारज्ञानाभावप्रतियोगिता कालिकविशेषणतासामानाधिकरण्याभ्यां सम्बन्धाभ्यामवच्छिन्ना बोध्या । अत एव शत्य इत्यादौ शाब्दसम्भवेनाव्याप्तेर्वारणार्थं सुबन्यज्ञानजन्योपस्थितिप्रकारत्वाभावविशिष्टत्वं धर्मे विशेषणमस्तु तावतैवाव्याप्तिवारणसम्भवात् स्वार्थकेत्यादि प्रकारीभवदित्यन्तं व्यर्थमिति परास्तम् । स्वार्थकेत्याद्यनुक्तौ तादृशसमभिव्याहारज्ञानाभावस्य सुब्ज्ञान-

विना निवेशयितुमशक्यत्वात्। अनुदण्डं जातिरित्यादौ शाब्दप्रकारतया दण्डकर्मत्वेऽव्याप्त्यनुद्धारात्। न चास्तु स्वार्थकेत्यादिकं धर्मविशेषणं तथापि सुबन्यजन्योपस्थितिप्रकारत्वाभावस्य वैशिष्ट्यं धर्मे धर्मविशेषणीभूततादृशोपस्थितिप्रकारत्वे वा निवेशनीयमित्यत्र विनिगमकाभाव इति वाच्यम्। पुरुषान्तरीयतद्धितजन्योपस्थितेः सार्वदिकत्वसम्भवनेन शतकरणत्वेऽव्याप्तिसम्भावनात् सुबन्यजन्योपस्थितौ शाब्दे च तत्पुरुषीयत्वं निवेश्याव्याप्तिसम्भावननिरासेऽपि पुरुषभेदेन कारकभेदापत्तेः तादृशोपस्थितिप्रकारतायां तु सुबन्यजन्योपस्थितिप्रकारत्वाभावस्य वैशिष्ट्यनिवेशे तत्प्रतियोगितायां स्वनिरूपकज्ञानसमानाधिकरणज्ञानीयत्वसम्बन्धेनाप्यवच्छिन्नत्वप्रवेशात् पुरुषान्तरीयतद्धितजन्योपस्थितेः सार्वदिकत्वसम्भावनेऽप्यव्याप्तिसम्भावननिरासात् तत्पुरुषीयत्वानिवेशेन विनिगमकसम्भवात्। एवं गेहे पचतीत्यादौ सप्तम्यर्थाधेयत्वस्य गेहे घट इत्यादौ शाब्दप्रकारतया तत्राव्याप्तिः स्यात्तद्वारणाय क्रियानिरूपकत्वोपलक्षितसम्बन्धावच्छिन्नत्वं स्वप्रकारताविशेषणम्। तेन गेहे घट इत्यादौ सप्तम्यर्थाधेयत्वस्याधेयत्वीयस्वरूपसम्बन्धेन शाब्दप्रकारत्वेऽपि क्रियानिरूपकेण कर्तृकर्मान्यतरघटितपरम्परासम्बन्धावच्छिन्नाधेयत्वीयस्वरूपसंबन्धेन तत्र शाब्दप्रकारत्वविरहान्नाव्याप्तिरिति। तत्र हि क्रियानिरूपकत्वविशिष्टसम्बन्धावच्छिन्नत्वोक्तौ कान्तस्य हसतीत्यादौ षष्ठ्यर्थशेषस्य हासनिरूपकत्वविशिष्टस्वरूपसम्बन्धेन कान्तस्य चेष्टा इत्यादौ चेष्टान्वयविषयकशाब्दप्रकारत्ववि-

रद्वात् षष्ठ्यर्थशेषेऽतिव्याप्तिः स्यादिति क्रियानिरूपकत्वो-पलक्षितत्वेन सम्बन्धो विवक्षितस्तेन तथोपलक्षितेन स्व-रूपसम्बन्धेन षष्ठ्यर्थशेषस्य चैत्रान्वयविषयकशाब्दप्रका-रत्वान्न तत्रातिव्याप्तिः। यदि च सप्तम्या द्विविधमाधे-यत्वमर्थस्तदा तण्डुलन्न पचतीत्यादाविव तण्डुलं नेत्यादौ तण्डुलकर्मत्वस्य नञर्थान्वयविषयकशाब्दप्रकारकर्म-त्वादावव्याप्तिरसम्भवो वा स्यात् तद्वारणाय नि-रुक्तसम्बन्धावच्छिन्नत्वं स्वप्रकारताविशेषणं बोध्यम्। यदि च धातुविनाकृतात् तण्डुलं नेत्यादिवाक्यात् कर्म-त्वादेर्नञर्थान्वयविषयकशाब्दबोधो नाभ्युपेयते नञर्थे कर्मत्वादेरन्वयबोधे नञो धातुसमभिव्याहारस्य तन्त्र-त्वादिति। तदा निरुक्तसम्बन्धावच्छिन्नत्वं न स्वप्रकार-ताविशेषणं तण्डुलं न पचतीत्यादौ कर्मत्वस्य नञ-र्थान्वयविषयकशाब्दप्रकारत्वेऽपि तादृशशाब्दस्य धा-तुपदव्यतिरेकप्रयुक्तव्यतिरेकप्रतियोगित्वान्न तत्राव्या-प्तिरिति। एवं निरुक्तशाब्दसामान्यस्य लक्षणत्वे स्रो-तरि निरुक्तशाब्दसामान्यस्य समवायेन सत्त्वात्तत्राति-व्याप्तिः स्यादतनिरूपकत्वमुक्तं निरूपकत्वं प्रकारत्वं बोध्यम्। तावतापि धात्वर्थतावच्छेदकादावतिव्याप्ति-रिति सुवर्थत्वमुक्तं सुवर्थत्वं तु सुबजन्योपस्थितिप्रका-रीभवद्धर्मत्वं बोध्यमिति। अत्रेयमुपपत्तिर्निरर्थकपदास-मभिव्याहृतद्वितीयार्थकर्मत्वप्रकारतानिरूपितविशेष्य-तासम्बन्धेन शाब्दं प्रति भावप्रत्ययान्यप्रत्ययप्रकृतिधातु-जन्योपस्थितेर्विशेष्यतासम्बन्धेन हेतुत्वं तेन घटादिप-देन लक्षणया पाकोपस्थितौ योग्यतासत्त्वेऽपि तण्डुलं-

घट इत्यादौ न तथा शाब्दबोधः। भावाख्यातस्थले द्वितीयान्तपदसत्त्वेऽपि तण्डुलं पच्यत इत्यादौ न शाब्दबोध इत्यन्वयव्यभिचारवारणाय प्रकृत्यन्तं धातुविशेषणम्। न चोक्तव्यभिचारवारणाय भावप्रत्ययाप्रकृतित्वमेव धातुविशेषणमस्तु किं द्वितीयप्रत्ययपदप्रवेशेनेति वाच्यम्। तथा सति तण्डुलं पच् इत्यादौ शाब्दापत्तेः। इत्थमेव निर्विभक्तिकस्य शब्दस्य शाब्दाप्रयोजकत्वरूपमसाधुत्वमुपपद्यते। इदमेवासाधुत्वं "लः कर्मणि च भावे चाकर्मकेभ्य" इति सूत्रेऽकर्मकेभ्य इति पदं भावप्रत्ययान्तधातोः कर्मत्वप्रकारकशाब्दाप्रयोजकत्वलक्षणं ज्ञापयति। एवं षष्ठ्यर्थस्य कर्मत्वस्य कर्तृत्वस्य च प्रकारतानिरूपितविशेष्यतासम्बन्धेन शाब्दं प्रति कृदन्तधातुजन्योपस्थितेर्विशेष्यतासम्बन्धेन हेतुत्वकल्पनेन तण्डुलस्य पाकः पाचको मैत्रस्य पाकः पाच्यो वेत्यादौ तण्डुलकर्मत्वमैत्रकर्तृत्वप्रकारकपाकविशेष्यकशाब्दबोधस्य नानुपपत्तिरिति षष्ठ्यर्थयोः कर्मत्वकर्तृत्वयोर्न कारकत्वानुपपत्तिः। एवं लादेशादियोगे "न लोके" तिसूत्रेण षष्ठ्या निषेधेनासाधुतया तण्डुलस्य पचनं मैत्रस्य पच्यमानो वेत्यादौ कर्मत्वकर्तृत्वप्रकारकशाब्दानुत्पत्त्याऽन्वयव्यभिचारः स्यात्। तद्वारणाय लादेशादिभिन्नत्वं कृतिविशेषणं देयमिति।

यदि तण्डुलं पाचक इत्यादौ द्वितीयार्थकर्तृत्वस्य धात्वर्थेनान्वयः "कर्तृकर्मणोः कृती" ति सूत्रेण षष्ठीविधायकेन द्वितीयाया अपवादादिति। तदा लादेशादिभिन्नकृदन्यत्वमपि भावप्रत्ययान्यप्रत्यये विशेषणं देयमिति। एवं पच्यत इत्यादौ कर्माख्यातस्थले द्वितीयार्थकर्मत्वस्य न-

धात्वर्थेऽन्वय इति कर्मप्रत्ययान्यत्वमपि तत्र विशेषणं-बोध्यम् । अथ कर्मकर्मतान्यतरबोधकशब्दासमभिव्याहृतत्वं धातोरेव विशेषणं बोध्यम् । तेन छेत्तुं सांप्रतं वृक्ष इत्यादौ नारद इत्यबोधि स इत्यादौ निपातेन कर्मकर्मत्वयोर्बोधने धात्वर्थे द्वितीयार्थस्य नान्वय इति इदमेवासाधुत्वं कर्मप्रत्ययनिपातसमभिव्याहृतधातोरर्थे स्वार्थान्वयबोधाप्रयोजकत्वलक्षणं द्वितीयाया "अनभिहिते" इति सूत्रं ज्ञापयति । एवं तृतीयार्थकर्तृत्वकरणत्वप्रकारतानिरूपितविशेष्यतासम्बन्धेन शाब्दं प्रति कर्तृबोधकपदासमभिव्याहृतकरणबोधकपदासमभिव्याहृतसप्रत्ययधातुजन्योपस्थितेर्विशेष्यतासंबन्धेन यथायोग्यं हेतुत्वं तेन घटादिपदेन लक्षणया पाकोपस्थितावपि चैत्रेण घटः चैत्रेण काष्ठेन घट इत्यादौ न तथा शाब्दबोधः । न वा पचनं पचति वा इत्यादौ चैत्रेणेति तृतीयार्थकर्तृत्वस्य धात्वर्थेऽन्वयबोधः । न वा पचनमित्यादौ काष्ठेनेति तृतीयार्थकरणत्वस्य धात्वर्थेऽन्वयबोध इति । न्यायमते एवं कार्यकारणभावाः शाब्दिकमतेऽप्येते कार्यकारणभावाः । परं तु कर्मत्वकर्तृत्वकरणत्वानि न विभक्तीनामर्थाः किं तु कर्मकर्तृकरणानि । ते कर्मत्वकर्तृत्वकरणत्वान्यनिवेश्यकार्यकारणभावा यथोक्ता बोध्याः। एवं पञ्चम्यर्थविभागजनकत्वाद्यपादानत्वादिप्रकारतानिरूपितविशेष्यतासंबन्धेन शाब्दं प्रति प्रत्ययान्तधातुजन्योपस्थितेर्विशेष्यतासंबन्धेन हेतुत्वं तेन घटादिपदेन लक्षणया पतनोपस्थितावपि न तथा वृक्षाद्घट इत्यादौ शाब्दबोधः । वृक्षात्पतति पत्यते पतनमित्यादौ

तु तथा शाब्दबोधः। चौराद्बिभेतीत्यादौ हेतुतासामान्यविलक्षणस्य भयहेतुत्वस्य पञ्चम्यर्थस्य बिभेत्याद्यर्थ एवान्वयात्। चौराद्धनलाभ इत्यादावनन्वयात् न भयहेतुत्वेऽव्याप्तिशङ्का "भीत्रार्थानां भयहेतुरि"ति सूत्रे भयपदोपादानमेतदर्थमेवेत्यादिकं वक्ष्यते। अत्र कृत्तद्धितयोरपादानबोधकत्वं न दृश्यते समासे तु चौरभीत इत्यादौ चौरपदस्य चौरभीते लक्षणा भीतशब्दस्य तात्पर्यग्राहकत्वम्। तथा च धातुजन्योपस्थितिविरहात्पञ्चम्यर्थान्वयसम्भवादपादानबोधकपदासमभिव्याहृतत्वम् धातोर्न विशेषणं न्यायमते प्रयोजनविरहादिति। शाब्दिकमते कृत्तद्धितसमासेषु वृत्तिस्वीकारात् धातुजन्योपस्थितिसम्भवाच्च तद्विशेषणमेव। यदि च व्याघ्र इति बिभेति भेत्तुं सांप्रतं व्याघ्र इत्यादिप्रयोगानुरोधात् निपातोभयापादानमभिधत्ते तदा न्यायमतेऽपि तद्विशेषणं बोध्यमिति। एवं चतुर्थ्यर्थस्वत्वनिरूपकत्वादिप्रकारतानिरूपितविशेष्यतासंबन्धेन शाब्दं प्रति संप्रदानबोधकपदासमभिव्याहृतसप्रत्ययधातुजन्योपस्थितेर्विशेष्यतासंबन्धेन हेतुत्वं तेन घटादिपदेन लक्षणया दानोपस्थितावपि न तथाशाब्दबोधः। न वा दानीयो ब्राह्मणायेत्यादौ चतुर्थ्यर्थसंप्रदानत्वस्य धात्वर्थेऽन्वयबोधः। भवति च ब्राह्मणाय ददाति दीयते दानमित्यादौ तथाशाब्दबोधः। एवं सप्तम्यर्थस्य कर्तृकर्मान्यतरघटितपरम्परासंबन्धावच्छिन्नाधेयत्वस्य प्रकारतयाऽऽधेयत्वसामान्यस्य निरुक्तसंबन्धावच्छिन्नप्रकारतया वा निरूपितं यद्विशेष्यत्वं तेन संबन्धेन शाब्दं प्रति विशेष्यतासंबन्धेनाधिकरणबोधकप-

दासमभिव्याहृतधातुजन्योपस्थितेर्हेतुत्वम् । तेन घटादिपदेन पाकोपस्थितावपि न तथाशाब्दबोधः । न वा पचनौ स्थाल्यामित्यादौ सप्तम्यर्थाधेयत्वस्य धात्वर्थेऽन्वयबोधः । भवति च स्थाल्यां पचति पच्यते पाक इत्यादौ तथाशाब्दबोधः । एवं कारकलक्षणे समुपपन्ने कर्तृत्वादीनां धात्वर्थविशेष्यकानिरुक्तसुबन्तज्ञानजन्योपस्थितिप्रकारीभवद्धर्मावच्छिन्नप्रकारताकशाब्दकालावच्छेदेनैव कारकत्वं यथा धूमादीनां व्याप्तिपक्षधर्मताज्ञानकालावच्छेदेनैव वह्निगमकत्वस्वरूपं वह्निलिङ्गत्वमिति । इत्थं च क्रियान्वयित्वमित्यपि प्राचीनलक्षणं संगच्छते । तथा हि । अन्वयित्वमात्रोक्तौ नामार्थान्वयिनि षष्ठ्यर्थशेषादावतिव्याप्तिस्तद्वारणार्थमुपात्तेऽपि क्रियापदे क्तान्तस्य वस्यतोत्यादौ सा तदवस्थैवेति क्रियामात्रान्वयित्वं तद्ग्राह्यम् । तदर्थस्तु धातुं विना स्वविशेषणताकान्वयबोधाजनकसुबर्थत्वमिति तिङर्थस्य कारकत्वमते सुप्पदस्थाने विभक्तिपदं बोध्यमिति विभक्तिज्ञानजन्योपस्थितिविषयो विभक्त्यर्थस्तत्र तादृशोपस्थितौ निरुक्तान्वयबोधस्याजनकत्वमनुपधानं बोध्यमिति । एवं धातुं विना स्वविशेषणताकान्वयबोधानुपहितस्य विभक्तिज्ञानजन्योपस्थितिसामान्यस्य विषयः नामार्थान्वययोग्यः कारकइति । अत्र स्वविशेषणतायां सुप्पदस्थाने विभक्तिपदं प्रक्षिप्य पूर्वोक्तं विशेषणं बोध्यमिति षष्ठ्यर्थशेषेऽतिव्याप्तिवारणायानुपहितस्येत्यन्तं सामान्यविशेषणं तत्राप्यसम्भववारणाय धातुं विनेत्युक्तं क्तान्तस्य वस्यतोत्यादौ षष्ठ्यर्थशेषेऽतिव्याप्तिवारणाय सामान्यपदमिति । इष्टसा-

धनत्वादावतिव्याप्तिवारणाय नामार्थान्वययोग्यत्वं विशेषणं स्वविशेषणताविशेषणकत्वं पूर्वोक्तं बोध्यमिति इयाँस्तु विशेषः । प्रथमान्तार्थविशेष्यताकतिङर्थकर्तृत्वकर्मत्ववृत्तिप्रकारतया शाब्दं प्रति धातुसमभिव्याहृततिङ्जन्योपस्थितेर्विशेष्यतया हेतुत्वमिति शाब्दिकमतेऽप्ययं हेतुहेतुमद्भावः । परं तु प्रथमान्तार्थविशेषणताककर्तृकर्मविशेष्यतया शाब्दं प्रतीति विशेषः । तेन तिदेवदत्तइत्यादौ न तथाशाब्दबोध इति । एवं निरर्थकपदसमभिव्याहारज्ञानाभावविशिष्टद्वितीयादिज्ञानजन्योपस्थितिविशेष्यतापन्नं कर्मत्वम् । तत्तद्विभक्तिजन्योपस्थितिविशेष्यतापन्नं कर्तृत्वं करणत्वं संप्रदानत्वमपादानत्वमधिकरणत्वं नानाविधं कारकपदस्य शक्यम् । नानार्थमेव कारकपदं तथा च कर्मत्वादिसकलसाधारणं कारकपदवाच्यत्वमेव कारकत्वमिति । यथा गोपृथिव्यादिसकलसाधारणं गोपदवाच्यत्वं गोत्वमिति । ननु नानार्थत्वाभ्युपगमेऽपि कारकपदस्य कारकपदवाच्यत्वं कारकत्वं न भवति कारकपदाधुनिकसङ्केतविषये द्रव्यादावतिव्याप्तेः । न च नित्यसंकेतेन कारकपदवत्त्वं तत् आधुनिकसंकेतविषये द्रव्यादौ नित्यसंकेताभावान्नातिव्याप्तिरिति वाच्यम् । तथा सति कर्मत्वादीनामतथात्वादसंभवापत्तेः तेषां शाब्दिकसंकेतेन कारकपदवत्त्वादिति चेन्न । कर्मत्वादौ कारकपदस्य नित्यसङ्केतात् । व्याकरणे कुत्रापि कारकसंज्ञाया अभावात् शाब्दिकसङ्केताप्रसक्तेः । अत एव "कारक" इत्यधिकारसूत्रसुक्ता व्याकरणे "ध्रुवमपायेऽपादानमि" त्यादिना का-

रकगणाभिधानं सङ्गच्छते। कारकपदस्यानित्यसङ्केतभावे कारकसंज्ञाग्राहकसूत्रं विनाऽधिकारसूत्राभिधानस्यासङ्गत्यापत्तेरिति कारकपदवाच्यत्वमपि निष्प्रत्यूहमित्यास्तां विस्तरः॥

ईदृशकारकत्वस्य विभक्त्यर्थतावच्छेदकत्वविरहेऽपीदृशकारकत्वावलीढस्य रूपान्तरेण विभक्त्यर्थत्वमक्षतमेव। एवमीदृशकारकत्वशून्योऽकारकोऽस्यापि तथैवविभक्त्यर्थत्वमिति॥

ननु कारकाऽकारकौ कथं विभक्त्यर्थौ स्यातां विभक्तित्वस्यैव दुर्निरूपत्वात्। तथा हि। विभक्तित्वं न सुब्निराकाङ्क्षप्रत्ययत्वम् पाचयति पिपक्षतीत्यादौ णिच्सनोरतिव्याप्तेः न च सुप्तिङोरन्यतरनिराकाङ्क्षत्वं प्रवेशनीयमिति णिच्सनोर्नातिव्याप्तिस्तयोस्तिङाकाङ्क्षत्वादिति वाच्यम्। चैत्रः पचति फूत्कारविशेषादित्यादौ पञ्चमीतिपोः परस्परसाकाङ्क्षत्वेनोभयोरव्याप्तेः। तार्तीयीक इत्यादौ तीयादितद्धितेऽतिव्याप्तेश्च। ईकक्प्रकृतेस्तीयस्य सुप्तिङ्निराकाङ्क्षत्वात्। अत एव सुप्तिङोरप्रकृतित्वं तन्निराकाङ्क्षमिति दर्शितयोः पञ्चमीतिपोर्नाव्याप्तिरिति परास्तम्। सुप्तिङन्यतरत्वस्यैव सम्यक्त्वे तदन्यतराप्रकृतित्वे व्यर्थविशेष्यत्वाच्च। यत्तु प्रकृत्यर्थविधेयतानिरूपितस्वीयोद्देश्यताकशाब्दजनकशब्दत्वम् सुप्तिङोरेव तथाभूतशाब्दजनकत्वमिति लक्षणसंगमः कृत्तद्धितादेरर्थे प्रकृत्यर्थस्य न विधेयतयान्वय इति न तत्रातिव्याप्तिरिति। तदसत्। सुप्तिङोरर्थे प्रकृत्यर्थस्य विधेयत्वेनान्वयेऽननुभवात् मानाभावाच्च। किं च

तण्डुलं पचतीत्यादौ तण्डुलांशे कर्मतेत्यवान्तरवाक्यार्थबोधे तण्डुलस्य विधेयत्वं कर्मत्वस्योद्देश्यत्वं यदि भवति तदा तण्डुलमोदनीयत्वादिति द्वितीयार्थकर्मतापन्नकन्यायप्रयोगः स्यात् । यदि प्रकृत्यर्थविशेषणतानिरूपितस्वार्थविशेष्यताकबोधजनकत्वमेवाभ्युपेयते तदा प्रत्ययान्तरसाधारण्यान्नेदं लक्षणम् । अपि च दाक्षिरित्यादौ तद्धितार्थेऽपत्ये दक्षादेः प्रकृत्यर्थस्य तुल्ययुक्त्या विधेयतयाऽन्वये बाधकाभावात्तद्धितेऽतिव्याप्तिः । एवं पिपक्षेत्यादौ सनोऽर्थे इच्छायां पाकस्य तथान्वयात्सन्प्रत्यये कर्तेत्यादौ कृदर्थे आश्रये कृतेस्तथान्वयात्कृत्प्रत्यये चातिव्याप्तिः । न च दर्शितस्थलेषु प्रकृत्यर्थस्य विधेयतया न प्रत्ययार्थेऽन्वयस्तथासत्यपत्यं दक्षस्य चैत्रस्य च इच्छा पाकस्य भोजनस्य च आश्रयः कृतेर्ज्ञानस्य चेत्यादौ दक्षचैत्रयोः पाकभोजनयोः कृतिज्ञानयोर्युगपद्विधेयताद्वयशाल्यन्वयबोध इव दाक्षिश्चैत्रस्य पिपक्षा भोजनस्य कर्ता ज्ञानस्येत्यादौ दक्षचैत्रयोः पाकभोजनयोः कृतिज्ञानयोर्युगपद्विधेयताद्वयशाल्यन्वयबोधस्स्यादिति वाच्यम्। प्रत्ययार्थे प्रकृत्यर्थान्वयस्य व्युत्पन्नत्वेन प्रकृत्यर्थान्यस्य चैत्रादेस्तद्धिताद्यर्थे विधेयतयान्वयबोधस्यानुपपत्तेः । अन्यथा तवापि तण्डुलमोदनस्येत्यादौ तण्डुलौदनोभयविधेयताकान्वयबोधः स्यात् न चेयमिष्टापत्तिस्तथासति सर्वदर्शनसिद्धान्तविरोधमदूषणमभ्युपगच्छतो भवतः प्रदर्शितस्थले तद्धिताद्यर्थे चैत्रादेरन्वये कुतो नेष्टापत्तिः । न चैवं दाक्षिः सुन्दर इत्यादौ सुन्दरतादात्म्यस्य प्रकृत्यर्थान्यस्य तद्धितार्थेऽन्वयो न स्यादिति वाच्यम् । दक्षाप-

त्यस्वरूपविशिष्टस्य तद्धितान्तवाक्यार्थस्य प्रत्ययार्थतया तत्र सुन्दरतादात्म्यान्वयस्य निष्प्रत्यूहत्वात्। तद्धितार्थे केवलापत्ये सुन्दरतादात्म्यान्वयस्य केनाप्यनभ्युपगमात् न चैवं तण्डुलमोदनस्येत्यादौ तण्डुलकर्मत्वे वाक्यार्थे ओदनादेरन्वयः स्यादिति वाच्यम्। प्रकृत्यर्थविशेषितप्रत्ययार्थस्वरूपवाक्यार्थस्य विशेष्यतयाऽन्वये कृत्तद्धितान्तस्यैव प्रयोजकत्वात्। तण्डुलकर्मत्वादिरूपवाक्यार्थस्य विशेषणतयाऽन्वये धात्वर्थस्य प्रयोजकत्वात्तण्डुलमोदनस्येत्यादावोदनादेरन्वयासम्भवात्। यत्र प्रकृत्यर्थस्य प्रत्ययार्थे नान्वययोग्यता पारिमाण्डल्यादौ तत्र नञ्समभिव्याहारेऽन्वयबोधस्य प्रामाणिकत्वे तु तत्रैव प्रकृत्यर्थविशेषितनञर्थस्याप्रकृत्यर्थस्य प्रकृतिलभ्यस्य वान्वय इति वक्ष्यते। एतेन प्रथमोक्तपदार्थस्यैवोद्देश्यत्वं भवति "यच्छब्दयोगः प्राथम्यं भवेदुद्देश्यलक्षणमि"ति व्युत्पत्तेरत एव "न्यक्कारो ह्ययमेव मे" इत्यादावविमृष्टविधेयांशकत्वं दोषमाचक्षते काव्यविदः। तथा च तण्डुलमित्यादौ तण्डुलीया कर्मतेति बोधे तण्डुलस्य विधेयत्वं न भवति। किं तु पर्वते वह्निरित्यादौ विशेषणीभूतपर्वतादेरिव तण्डुलस्योद्देश्यत्वमेव। तथा च प्रकृत्यर्थोद्देश्यतानिरूपितसुबर्थविधेयताकशाब्दजनकशब्दत्वं विभक्तित्वमिति परास्तम्। तद्धितादिप्रकृत्यर्थस्योद्देश्यतयाऽन्वये बाधकाभावात्। तद्धितादावतिव्याप्तिरिति चेत्। उच्यते। संख्यावाचकप्रत्ययत्वं विभक्तित्वमिति प्रत्ययत्वमात्रोक्तौ कृत्तद्धितादावतिव्याप्तिरिति संख्यावाचकत्वमुक्तम्। यद्यपि संख्यात्वविशिष्टस्य वाचकत्वं न विभ-

ख्तीनां किं तु एकत्वत्वविशिष्टस्य द्वित्वत्वविशिष्टस्य बहुत्वत्वविशिष्टस्य चेति संख्यात्वव्याप्यजातिविशिष्ट-वाचकत्वं वक्तुमुचितं तथापि लाघवेन संख्यामात्रवि-शेष्यताकबोधोद्देश्यकसंकेतवत्वं निवेशनीयं तावतैव समीहितसिद्धेः पार्थिवमित्यादितद्धितस्य सम्बन्धि-त्वेन संख्याबोधकत्वोपगमे तत्रातिव्याप्तिवारणाय मात्रपदमुक्तम् । तदर्थस्तु संख्येतराद्वृत्तित्वं तथा च संख्येतरावृत्तिविशेष्यताकबोधोद्देश्यकसङ्केतवत्वं सं-ख्यावाचकत्वं बोध्यमिति । ननु चैत्रो मैत्रश्च पचत-इत्यादौ द्वित्वस्य चैत्रो मैत्रो जैत्रश्च पचन्तीत्यादौ ब-हुत्वस्य बोधाद्द्विवचनबहुवचनतिङोः संख्यावाचकत्व-मस्तु तिङेकवचनस्य संख्यावाचकत्वे न मानमस्ती-ति तिङेकवचनेऽव्याप्तिरिति चेन्न । तथा सति पु-रुषौ पचतीति प्रयोगप्रसङ्गात् । मम तु तिङुपस्थाप्यै-कत्वस्य द्वित्वविशिष्टपुरुषेऽन्वयायोग्यत्वमिति वह्निना-सिञ्चतीतिवत् न तादृशप्रयोगः सम्भवति । न च द्विवच-नप्रथमान्ते द्विवचनतिङन्तस्य समभिव्याहारस्तयोः पर-स्परार्थान्वयानुभवे तन्त्रमिति न तथाप्रयोगः सम्भवतीति वाच्यम् । पुरुषौ स्त्री च पचन्तीत्यादौ बहुवचनतिङन्त-समभिव्याहारेऽपि तथाप्रथमान्तार्थेऽन्वयदर्शनेन तथा-तिङन्तसमभिव्याहारस्यातन्त्रत्वात् । न च तथाप्रथमा-न्तबहुवचनतिङन्तस्यापि समभिव्याहारस्तन्त्रमिति न दर्शितसमभिव्याहारस्यातन्त्रत्वमिति वाच्यम् । तथापि तथाप्रथमान्ते बहुवचनान्तस्येव एकवचनान्तस्य तिङ-न्तस्य समभिव्याहारः कुतो न तन्त्रमिति वीनानुयोगे

संख्यान्वयायोग्यत्वस्यैव बीजत्वेन प्रदर्शनीयत्वात् । अत एव पचतीत्यादौ तृतीयाप्रसङ्गवारणाय कर्तृसंख्यानभिधानं तृतीयाप्रयोजकमित्याख्यातवादे दीधितिकृद्भिः प्रमाणीकृतमिति । इत्थं च संख्यावाचकत्वं शतादिशब्दे-ऽतिव्याप्तमिति प्रत्ययत्वमुपात्तम् । ननु प्रत्ययत्वं दुर्निरूपमिति विभक्तित्वं दुर्निरूपमेव । तथा हि । प्रत्ययत्वं न तावत्पदार्थान्वितस्वार्थकत्वं नामधात्वादावतिव्याप्तेः । नापि पूर्वपदार्थान्वितस्वार्थकत्वम् । राजपुरुष इत्यादिसमासेऽतिव्याप्तेः अत एव पूर्वपदार्थान्वितप्रधानीभूतस्वार्थकत्वमिति परास्तम् । यत्तु शब्दान्तरार्थाविशेषिते यादृशे स्वार्थे धर्मिणि तिङर्थस्यान्वयबोधने स्वरूपायोग्यः स निभतुल्यसदृशप्रतियोग्यनुयोग्यधिकरणाधेयादिशब्देभ्यो निपातेभ्यश्च भिन्नः शब्दस्तादृशार्थे प्रत्यय इति कृत्तद्धितादीनां स्वार्थे तिङर्थान्वयस्वरूपयोग्यत्वात्तेष्वव्याप्तिरिति शब्दान्तरार्थाविशेषितत्वं स्वार्थस्य विशेषणं तस्या अङ्ककमित्यादौ कादिप्रत्ययस्य कमस्तीत्यादौ शिरःप्रभृतिस्वार्थे तिङर्थान्वयस्वरूपयोग्यत्वात् तत्राव्याप्तिरिति यादृशत्वं विशेषणम् । तेन कादिप्रत्ययस्यात्मादिस्वरूपस्वार्थे तिङर्थान्वयस्वरूपयोग्यत्वान्न तत्रातिव्याप्तिरिति । अस्तीन्द्राणीत्यादाविन्द्रशब्दार्थाविशेषिते ङीबर्थे स्त्रियां तिङर्थान्वयस्वरूपायोग्ये आनुगागमेऽतिव्याप्तिरिति स्वार्थइत्युक्तम् । प्रत्ययमात्रस्य स्वार्थे प्रकृत्यर्थान्वयस्वरूपयोग्यादसम्भवः स्यादिति तिङर्थस्येत्युक्तम् । चन्द्रनिभोऽस्तीत्यादौ निभादिशब्दानां पूर्वपदार्थचन्द्राद्यविशेषिते स्वार्थे सदृशादौ तिङर्थान्वयस्व-

रूपायोग्यत्वात्तत्रातिव्याप्तिरिति निपातादिभिन्नत्वं शब्दस्य विशेषणम् । समुच्चयविकल्पार्थकानां चवादिनिपातानां स्वार्थे तिङर्थान्वयस्वरूपायोग्यत्वात्तत्रातिव्याप्तिरिति निपातभिन्नत्वं विशेषणम् । कादिशब्दस्य शिरःप्रभृत्यर्थे प्रत्ययत्ववारणाय तादृशार्थे इत्युक्तमिति मतम् । तदपि न सम्यक् । निपातादिशकलशब्दस्य प्रतियोगिनोऽवगमस्याशक्यतया तावद्भिन्नत्वस्य दुर्ग्रहत्वात् । किं च संबन्धीत्यादाविन्प्रत्ययार्थस्य संबन्धिनः शब्दान्तरसंबन्धेन विशेषितत्वात्तदविशेषितस्वार्थप्रसिध्या तत्राव्याप्तिः । यदि चाविशेषितत्वमनन्वितत्वमित्युच्यते तदाऽपि खले कपोतन्यायेन शाब्दमते दाधिरस्ति पाचकोऽस्तीत्यादौ प्रकृत्यर्थेन समं तिङर्थस्य तद्धितकृत्प्रत्ययार्थे युगपदन्वयेन तयोरव्याप्तिः । अपि च संबोधनान्तस्य निर्विभक्तिकस्य च चैत्रादिप्रातिपदिकस्य स्वार्थे तिङर्थान्वयायोग्यत्वात्तादृशतादृशचैत्रादिपदेऽतिव्याप्तिः । न च चैत्रोऽस्तीत्यादावन्वयदर्शनेन चैत्रादिपदानां न तिङर्थान्वयायोग्यत्वमिति दर्शितस्थलेषु संबन्धीतरप्रथमासमभिव्याहारस्य सहकारिणो विरहान्नान्वयबोध इति वाच्यम् । एवं सति हि कृत्तद्धितस्थलेऽपि प्रकृतिसमभिव्याहारस्य सहकारित्वान्न तिङर्थान्वयायोग्यत्वमिति तत्राव्याप्तिः । न च कृत्तद्धितस्थले प्रकृतिसमभिव्याहारो न तिङर्थान्वये तन्त्रं किं तु प्रकृत्यर्थान्वय एवेति वाच्यम् । प्रत्यये प्रकृतिसमभिव्याहारस्य प्रत्ययार्थान्वयमात्रे तन्त्रत्वात्प्रकृतिविनाकृतस्य कुत्राप्यननुभावकत्वात् । एवं च पाकोऽस्तीत्यादौ घञ्प्रत्यये ऽव्याप्तिश्च पदान्तरार्थानन्विते धातुप-

अभयोपस्थापिते पाके तिङर्थान्वयस्य सर्वजनसिद्धतया घञस्तिङर्थान्वययोग्यत्वादिति तदपि शब्दान्तरार्थाविशेषितस्य स्वार्थस्य विशेषणतया ऽन्वयबोधनायोग्यशब्दः प्रत्यय इति तदपि तादृशयोर्लिङ्गसंख्ययोर्विशेषणतया ऽन्वययोग्ये सुपि पाकमित्यादौ तादृशस्य पाकस्य कर्मत्वे विशेषणतया ऽन्वययोग्ये घञ्प्रत्यये चाव्याप्त्या नादरणीयमिति। तस्मात्प्रत्ययत्वं दुर्वचमिति चेदुच्यते। सार्थकशब्दोत्तरत्वज्ञानाविषयो यः शब्दः शाब्दबोधं नार्जयति स प्रत्ययः प्रकृतीनां नामधातूनां सार्थकशब्दोत्तरत्वज्ञानाविषयाणामपि शाब्दबोधार्जकत्वं प्रत्ययानां तु सार्थकशब्दोत्तरत्वज्ञानविषयाणामेव तथात्वमिति तथा च स्वार्थविषयकशाब्दसामान्योयाभावप्रयोजकाभावप्रतियोगिसार्थकशब्दोत्तरत्वज्ञानीयोत्तरत्वप्रकारतानिरूपितविशेष्यतावत्सार्थकशब्दत्वं प्रत्ययत्वमिति। राज्ञः पुरुष इत्यादौ पुरुषपदे राजपदोत्तरत्वप्रकारकज्ञानविषयतायाः सत्वादतिव्याप्तिरिति प्रतियोग्यन्तं ज्ञानविशेषणम्। पुरुषपदे षष्ठ्यन्तराजपदोत्तरत्वज्ञानस्य निरुक्तप्रतियोगित्वविरहात् पुरुषो राज्ञ इत्यत्रोऽपि शाब्दादयान्नातिव्याप्तिरिति असंभववारणाय स्वार्थविषयकत्वं शाब्दविशेषणं राजपुरुष इत्यादिसमासे पुरुषपदे राजपदोत्तरत्वज्ञानं राजपदार्थविशेषणताकपुरुषपदार्थविशेष्यताकशाब्दबोधस्य जनकमतः पुरुषराज इत्यादौ न तथा शाब्दबोधः। पुरुषो राजेत्यादौ राजपदार्थान्वितविभक्त्यर्थतादात्म्यस्य पुरुषपदार्थे विशेषणतया ऽन्वयात्। राजपदार्थस्यानन्वयान्न व्यभिचार

इति राजपदार्थविशेषणताकपुरुषविशेष्यताकशाब्दाभावप्रयोजकाभावप्रतियोगिनो राजपदोत्तरत्वज्ञानस्य विषये पुरुषपदे ऽतिव्याप्तिरिति तद्वारणाय तादृशशाब्दसामान्यीयत्वेनाभावो विशेषितस्तेन पुरुषपदार्थविषयकशाब्दसामान्यं प्रति राजपदोत्तरज्ञानं न जनकं पुरुषस्तिष्ठतीत्यादौ व्यभिचारात् न तादृशशाब्दसामान्यीयाभावप्रयोजकाभावप्रतियोगिराजपदोत्तरत्वज्ञानमिति तद्विषये पुरुषपदे नातिव्याप्तिरिति संयोगाद्युत्तरत्वज्ञानस्य तादृशप्रतियोगित्वादसंभवः स्यादिति शब्दपदमुपात्तम्। अध्युत्तरत्वेनेङो ज्ञानमध्ययनशाब्दं प्रति हेतुरिति तादृशाभावप्रतियोगिनोऽध्युत्तरत्वज्ञानस्यविषये इङ्धातावतिव्याप्तिस्तद्वारणाय सार्थकत्वं शाब्दविशेषणम्। अध्यादिशब्दस्य निरर्थकत्वान्न तत्रातिव्याप्तिः। सार्थकशब्दोत्तरत्वज्ञानस्य प्रकृतितावच्छेदकप्रकारतानिरूपितविशेष्यतावति प्रकृतिशब्दे ऽतिव्याप्तिरिति विशेष्यतायामुत्तरत्वप्रकारतानिरूपितत्वं विशेषणम्। न च सार्थकशब्दोत्तरत्वप्रकारतानिरूपितज्ञानविशेष्यतावत्वं प्रवेश्यतां तावतैव समीहितसिद्धेस्तादृशोत्तरत्वज्ञानीयत्वस्योत्तरत्वप्रकारतायां निवेशो व्यर्थ इति वाच्यम्। यत्र इन्द्राणीत्यादौ पचतीत्यादौ इन्द्रोत्तरानुगुत्तरत्वेन ङीपो ज्ञानं पजुत्तरशवुत्तरत्वेन तिङो ज्ञानं शाब्दजनकं तत्र सार्थकशब्दोत्तरत्वप्रकारतानिरूपितविशेष्यताया ङीपि तिङि चासत्वात्तयोरव्याप्तिप्रसङ्गात्। तादृशोत्तरत्वज्ञानीयोत्तरत्वप्रकारताया निवेशे तु तादृशागमोत्तरत्वप्रकारतानिरूपितविशेष्यताया ङीपि तिङि च

सत्वान्न तयोरव्याप्तिरिति। एवं शबानुगाद्यागमे ऽति-
व्याप्तिवारणाय सार्थकपदं आगमस्यनिरर्थकत्वान्न तत्रा-
तिव्याप्तिवारणाय सार्थकपदं आगमस्यनिरर्थकत्वान्न-
तत्रातिव्याप्तिः "स्वं रूपं शब्दस्याशब्दसंज्ञे"ति शबाद्या-
गमानां स्वरूपार्थकत्वादतिव्याप्तितादवस्थ्यमिति श-
ब्दपदं वृत्तिमदर्थकं तेन सार्थकपदं हृत्त्वा स्वरूपेतरा-
र्थस्मारकपरमिति। अत्र विशेष्यता तादृशाभावप्रतियो-
गितावच्छेदिका बोध्या। तेनास्तिघट इत्यादावसुत्तरति-
बुत्तरं घटपदमित्याकारकासुत्तरत्वज्ञानीयोत्तरत्वप्रका-
रतानिरूपितविशेष्यताया घटपदे सत्वे ऽपि नातिव्या-
प्तिः। घटपदनिष्ठतादृशविशेष्यतायास्तादृशाभावप्रति-
योगितानवच्छेदकत्वात्। तादृशोत्तरत्वेन घटपदज्ञा-
नस्य शाब्दाहेतुत्वात्। असुत्तरस्तिप् घटपदं चेत्याकार-
कज्ञानादपि तथा शाब्दोदयात्। अत्र चैत्रोऽस्तीत्यादौ चै-
त्रपदार्थविशेष्यकसुबर्थलिङ्गसंख्याप्रकारकशाब्दं प्रति प्रा-
तिपदिकोत्तरः सुबिति चैत्रपदोत्तरः सुबिति वा ज्ञानं हेतुः
असर्थसत्ताविशेषविशेषणकतिङर्थाश्रयत्वविशेष्यकशाब्दं
प्रति धातूत्तरस्तिङ् इति असुत्तरस्तिप् इति वा ज्ञानं हेतुः।
एवमिन्द्राणीत्यादाविन्द्रपदार्थप्रकारकस्वस्वामिभावसं-
सर्गकङीबर्थस्त्रीविशेष्यकशाब्दं प्रति इन्द्रपदोत्तरानुगु-
त्तरो ङीबिति ज्ञानं हेतुः पचतीत्यादौ पजर्थविशेषणक-
तिङर्थयत्नविशेष्यकशाब्दं प्रति पजुत्तरशबुत्तरस्तिबिति-
ज्ञानं हेतुः तेन स्वचैत्रेत्यादौ असित्यादौ आनीइन्द्रे-
त्यादौ तिपचेत्यादौ न तथा शाब्दबोधः ऽत्तरत्वं तु
ध्वंसः तद्विशिष्ट उत्तरः तथा च चैत्र इत्यादौ चैत्रपदध्वं-

त्वविशिष्टं सुपदमिति ज्ञानस्य चैत्रपदत्वावच्छिन्नप्रकारतानिरूपितध्वंसत्वावच्छिन्नविशेष्यत्वावच्छिन्नप्रकारतानिरूपितसकारत्वावच्छिन्नविशेष्यताकज्ञानत्वेन अस्तीत्यादावुत्तरत्वज्ञानस्य अस्त्वावच्छिन्नप्रकारतानिरूपितध्वंसत्वावच्छिन्नविशेष्यत्वावच्छिन्नप्रकारतानिरूपितित्वावच्छिन्नविशेष्यताकज्ञानत्वेन इन्द्राणीत्यादावुत्तरत्वज्ञानस्य इन्द्रत्वावच्छिन्नप्रकारतानिरूपितध्वंसत्वावच्छिन्नविशेष्यत्वावच्छिन्नप्रकारतानिरूपिताणत्वावच्छिन्नविशेष्यत्वावच्छिन्नप्रकारतानिरूपितध्वंसत्वावच्छिन्नविशेष्यत्वावच्छिन्नप्रकारतानिरूपिते कारकत्वावच्छिन्नविशेष्यताकज्ञानत्वेन पचतीत्यादावुत्तरत्वज्ञानस्य पच्त्वावच्छिन्नप्रकारतानिरूपितध्वंसत्वावच्छिन्नविशेष्यत्वावच्छिन्नप्रकारतानिरूपितकारकत्वावच्छिन्नविशेष्यत्वावच्छिन्नप्रकारतानिरूपितध्वंसत्वावच्छिन्नविशेष्यत्वावच्छिन्नप्रकारतानिरूपितत्वावच्छिन्नविशेष्यताकज्ञानत्वेन हेतुत्वमेवमन्यत्राप्यूह्यम्। शबानुक्तिपामनुबन्धानामानुपूर्वी न ज्ञानहेतुतायां निविशते व्यर्थत्वात् गौरवप्रयोजकाच्च प्रयोगव्युत्पादनार्थमेव ते सूत्रकारेण निर्दिष्टाः एवमानुपूर्वीज्ञानहेतुत्वे सिद्धे तत्र पदाव्यवधानस्य निवेशनमफलं नितरान्तन्निर्वचनायासासादनमिति व्यवहितेऽपीदृशविशिष्टवैशिष्ट्यज्ञानात् शाब्दबोधो निष्प्रत्यूह एव। एवं यत्पदध्वंसवैशिष्ट्यज्ञानं शाब्दे हेतुस्तत्सार्थकं वक्तृजन्यत् पदं प्रकृतिरिति विशेषणाकृत्यं दर्शितप्रायमिति। यदि वक्तृजपि प्रत्ययत्वेन संग्राह्यस्तदा प्रत्ययलक्षणे तादृशनिरुक्तशब्दवक्तृजन्य-

तरत्वं निवेशनीयमिति । वस्तुतस्तु निपातादिबह्वादन्व-यरयोग्यं शब्दान्तरमेव बहुच् अन्यथा तद्धितत्वे बहुगुड इत्यादौ बहुशब्दानन्तरं सुबुत्पत्तिप्रसङ्गात् कृत्तद्धिते-तिसूत्रे तद्धितान्तस्यैवोपादानात् अन्यथा पचतकि भव-तकीत्यादौ सुबुत्पत्तिप्रसङ्गात् । तद्धितसूत्रसहचरितं ब-हुच्सूत्रं बहुचघटितसमुदायस्य तद्धितसाम्यं ज्ञापयति । तेन प्रातिपदिकत्वं तद्धितसुबादिकं च भवतीति । अत एव यदि बहुच्प्रत्ययः स्यात्तदा प्रत्ययः परश्चेत्यनन्तरं न बहुजिति मुनिः सूत्रयेत् । बहुच्सूत्रे पुरस्तादित्यपे-क्षया मात्रालाघवात् तावतैव बहुचः प्रकृतिपूर्वत्वलाभ-सम्भवादिति परास्तम् । एवं निभशब्दोऽपि सन्निभशब्द-वत् न पदोत्तरत्वेन ज्ञातः शाब्दहेतुस्तादृशहेतुताग्रा-हकाभावात् । प्रत्ययस्य तथाहेतुत्वे प्रत्ययः परश्चेत्यनु-शासनस्यैव ग्राहकत्वात् । तथा च निभं कमलस्य मुख मित्यादौ शाब्दोदयोऽभीष्ट एव । एवं शाब्दहेतोः पद-ध्वंसविशिष्टपदज्ञानस्य ध्वंसविशेषणया भातं सार्थकं पदं प्रकृतिः ध्वंसविशिष्यतया भातं सार्थकं पदं प्रत्ययः । तदुक्तं वाक्यपदीये भर्तृहरिणा ।

यः स्वेतरस्य यस्यार्थे स्वार्थस्यान्वयबोधने ।
यदपेक्षस्तयोः पूर्वा प्रकृतिः प्रत्ययः परः ॥

अपेक्षा पूर्वापरभावापन्नत्वेन ज्ञानं । तत्र प्रकृतेः पू-र्वतया ज्ञानं शब्दाङ्गमित्यत्र न प्रमाणम् । उत्तरत्वेन प्रत्ययज्ञानस्य वाचकतावच्छेदकत्वविरहेऽपि विभक्ति-त्वावलीढस्य रूपान्तरेण वाचकत्वमक्षतमेव । विभक्तिर-पि द्विधा । सुप्तिङ्भेदात् । लिङ्गवाचिका विभक्तिः सुप्

लिङ्गवाचिका विभक्तिस्तिङ् ङीप्रत्यये कृदादौ चाति-
व्याप्तिवारणायोभयत्र विभक्तिपदम्। सुपोऽपि प्रथमाद्वि-
तीयातृतीयाचतुर्थीपञ्चमीषष्ठीसप्तमीभेदात्सप्तविधाः।
तिङोऽपि प्रथममध्यमोत्तमपुरुषभेदात्त्रयः। विध्यादयस्ति-
ङर्थाः। कुसुमाञ्जलिप्रभृतिमूलग्रन्थे विस्तृताः प्रसङ्गेना-
त्रापि व्यक्तीभविष्यन्ति। तत्र विध्याद्यर्थेऽपि तिङां ति-
त्वादिना तेत्वादिना शक्तिः न त्वादेशीभूततत्तल्लकारा-
णां तिङि लादेशत्वज्ञानविरहिणोऽपि पुंसस्तत्तदर्थाव-
गमात्। पचतीत्यादौ विध्याद्यर्थबोधो न भवति योग्य-
तायास्तात्पर्यस्य वा विरहात्। तात्पर्यग्राहकस्तु पचेदि-
त्यादौ तिङो विकार एवेति मन्तव्यम्। एवं वर्त्तमानाती-
तानागतेषु कालेषु तिङां तित्वादिना तेत्वादिनैव श-
क्तिस्तत्रापि तत्तद्विकाराविकारसमभिव्याहाराणां तात्प-
र्यग्राहकत्वात्पचेदित्यादौ तात्पर्यग्राहकविरहात् वर्तमा-
नादे र्न बोधः वर्तमानादिकालस्तु तिङर्थकृतावन्वेतीति
न युक्तम्। तण्डुलः पच्यते इत्यादिकर्माख्यातेऽनन्वयप्र-
सङ्गात्। न च तत्र तिङर्थकर्मत्व एवान्वेतीति वाच्यम्
तथापि फलस्योत्पत्तेः पूर्वं प्रवृत्ते पच्यते ओदन इत्यादा-
वुत्पत्तिस्वरूपफलाधेयत्वे वर्तमानत्वस्यान्वेतुमयोग्यत्वे-
नाऽनन्वयप्रसङ्गात्। ओदनस्याविद्यमानतया वर्तमानो-
त्पत्त्याधेयत्वाऽनिरूपकत्वात्। अतः परिशेषाद्वाख्या-
तस्थले क्रियान्वयस्यावश्यकत्वात्तिङर्थः कालः क्रिया-
न्वयीति तत्र तिङ्प्रयोगाधिकरणं लवः काष्ठा वा व-
र्तमानः कालः ईदृशवर्तमानकालवृत्तिध्वंसप्रतियोगी-
कालोऽतीतकालः तादृशवर्तमानकालवृत्तिप्रागभावप्र-

तियोगी तादृशवर्तमानकालध्वंसाधिकरणं वा कालोऽनागतः कालः अत त्रयः काला स्वस्वाधेयत्वेन क्रियायामन्वियन्ति क्वचित् व्यापारे क्वचित्फले तत्र पचति अपचत् पच्यतीत्यादौ व्यापारे कालस्यान्वयः। न च पचतीत्यत्र वर्तमानकाल आधेयत्वेनान्वेतु अपचदित्यत्र विद्यमाननाशप्रतियोगित्वमतीतत्वमन्वेति न त्वतीतकालवृत्तित्वं पच्यतीत्यत्र विद्यमानप्रागभावप्रतियोगित्वादिरूपमनागतत्वमन्वेति न त्वनागतकालवृत्तित्वमिति वाच्यम्। "सदेव सौम्येदमग्र आसीत्" "एकमेवाद्वितीयं ब्रह्म" "तदैक्षत एकोऽहं बहु स्याम" त्यादिश्रुतिवाक्ये भगवत्सत्ताया भगवदिच्छाया अतीतत्वस्य बाधेनानन्वयप्रसङ्गात्। एवं भगवान् प्रलयं करिष्यतीत्यादौ भगवत्कृतेर्भावित्वस्य बाधेनानन्वयप्रसङ्गात्। अतीतकालवृत्तित्वस्य भगवदिच्छायां भाविकालवृत्तित्वस्य भगवत्कृतौ निष्प्रत्यूहतयाऽन्वयसम्भवात्। एवं वर्तमानकालोऽनागतकालश्च क्वचित्स्ववृत्तिध्वंसप्रतियोग्यवृत्तित्वेन स्वाधेयत्वेन चोभाभ्यां संबन्धाभ्यामन्वेति यथा वियुज्यते वियोक्ष्यते संयुज्यते संयोक्ष्यते इत्यादौ तेन कृष्णेन वियुज्यते वियोक्ष्यते व्रजमण्डलः गोवर्धनेन संयुज्यते संयोक्ष्यते वा इति नाधुनिकप्रयोगः। अन्यथा कृष्णवियोगगोवर्धनसंयोगयोर्वर्तमानानागतकालवृत्तित्वेन तथाप्रयोगो दुर्वारः स्यात्। एवं नष्ट अनश्यद्वा इत्यादावतीतकालवृत्तित्वं नाशेऽन्वेति नश्यति नङ्क्ष्यतीत्यादौवर्तमानानागकालयोर्दर्शिताभ्यां संबन्धाभ्यां नाशेऽन्वयः इत्थमेवप्रयोगातिप्रसङ्गवारिते नङ्क्ष्यतिनश्यतिनष्टइत्यादौप्रत्ययस्यानागतव-

तमानातीतानामुत्पत्तीनां क्रमेण प्रत्यायकत्वकल्पनम-फलमेवेति मन्तव्यम्। फले तु आस्ते इत्यादौ स्फिग्भू-संयोगानुकूलव्यापार आस्यर्थः । तत्र व्यापारस्याविद्य-मानत्वेऽपि स्फिग्भूसंयोगफलस्य विद्यमानतायामास्त-इति प्रयोगाद्वर्तमानकाल आधेयत्वेन स्फिग्भूतसंयोगे फ-लेऽन्वेति। एवं जागर्तीत्यादौ मिद्धामनोविभागानुकूलो-व्यापारो धात्वर्थस्तत्रापि मिद्धामनोविभागरूपफले वर्त-मानकालस्यान्वयः। एवं दण्डं दधातीत्यादौ धारणा-ख्यसंयोगानुकूलव्यापारो धात्वर्थः तत्रापि वर्तमानका-लस्य धारणाख्यसंयोगरूपफलेऽन्वयः। अत्रासिष्यते जा-गरिष्यति दण्डं धास्यतीत्यादावनागतकालः स्वष्टत्तिध्वं-सप्रतियोग्यवृत्तित्वेन स्वाधेयत्वेन चोभाभ्यां संबन्धाभ्यां फलेऽन्वेतीति फलस्य विद्यमानतायां न तथाप्रयोगः। एवमास्त अजागरत् दण्डमधादित्यादावतीतकालः स्व-ध्वंसाधिकरणवृत्तित्वेन स्वाधेयत्वेन चोभाभ्यां संबन्धाभ्यां फलेऽन्वेतीति फलस्य विद्यमानतायां न तथाप्रयोगः। य-दि चासेः स्फिग्भूसंयोग एवार्थ उपविशेः स तदनुकूल-व्यापारस्तार्थं उपविशतीत्यत्र वर्तमानकालस्य व्यापार एवान्वयः। आस्ते इत्यत्र स्फिग्भूसंयोगस्वरूपव्यापार एव वर्तमानकालस्यान्वयः। एवं जागर्तेरपि मिद्धामनोवि-भागस्वरूपव्यापार एवार्थः तत्रैव कालस्यान्वय इति वि-भाव्यते तदापि दण्डं दधातीत्यादौ फले कालस्यान्वयो-निष्प्रत्यूह एवेति दिक्॥

कर्तृत्वादयस्तिङर्थाः सुबर्था अपीति न पृथक् त-न्यन्ते। सुबर्थास्तु सुपां क्रमेणैव निरूपणीया इति क्रमेण सुपस्तदर्थाश्च निरूप्यन्ते।

तत्र सुऔजसिति त्रयः प्रत्ययाः प्रथमा । तदर्था अनुशासनसिद्धा अनुशासनं तु "प्रातिपदिकार्थलिङ्गपरिमाणवचनमात्रे प्रथमे"ति प्रातिपदिकार्थः सत्ता व्यक्तिरिति यावत् लिङ्गं पुमान् स्त्री क्लीबं च परिमाणं गुरुत्वं परिमितिश्च वचनमेकत्वं द्वित्वं बहुत्वं चेति । मात्रग्रहणं द्वितीयाद्यर्थकर्मत्वादिव्यवच्छेदार्थमिति । ननु रामो राजेत्यादौ व्यक्तेः प्रातिपदिकादुपस्थित एव लाभात् कथं प्रथमार्थत्वम् । न चैकदानेकवृत्तिरामत्वादिजातिवाचिनो रामादिशब्दान्न व्यक्तिलाभ इति व्यक्तिभानार्थं प्रथमायास्तदर्थकत्वमिति वाच्यम् । जातिशक्तिवादिनामपि मते जात्या व्यक्त्याक्षेपसम्भवेन व्यक्तेरन्यलभ्यतया प्रत्ययार्थत्वाप्रसक्तेः । अत एव तेषां तिङो भावनावाचित्वे भावनयाऽऽक्षेपेण कर्तुर्बोधने पचतीत्यादावनभिहिताधिकारीयतृतीयाया न प्रसक्तिरिति । यत्तु घटाद्यर्थेषु सुपां शक्तिः घटादिपदानामनन्तानां शक्तत्वे शक्ततावच्छेदकानन्त्यसम्भवेन सुपामेकविंशतिसंख्याकानां शक्ततावच्छेदकलाघवसम्भवेन तथात्वौचित्यादिति । तदपि न सम्यक् । घटादिपदानां निरर्थकत्वे प्रातिपदिकसंज्ञाविरहे तदनन्तरं सुबुत्पत्तेरप्रसक्तेः दधि भवतीत्यादौ सुपो लोपात्तत्र दध्यादिपदार्थानवगमप्रसङ्गात् । न च तत्रानुसन्धीयते विभक्तिरिति सांप्रतम् । तथापि राजपुरुष इत्यादिसमासे राजपदार्थावगमस्याशक्यत्वात् । न चात्राप्यनुसन्धीयते षष्ठीति वाच्यम् । तथा सति कटहस्य राज्ञ इत्यादाविव कटहस्य राजपुरुष इत्यत्रापि कटहादे राजान्वयप्रसङ्गात् । दर्शितसमासे नैयायिकानां

राजपदलक्षणायाः शाब्दिकानां इष्टत्वेन वैयर्थ्येनाकल्पनापत्तेश्च। किं च चैत्र इत्यादौ सुबर्थचैत्रव्यक्तौ सुबर्थयो लिङ्गसंख्ययो र्भेदान्वयोऽवश्यमभ्युपेयस्तथासति रूपं घट इत्यादौ तन्तुपटावित्यादौ रूपघटयोस्तन्तुपटयो र्भेदान्वयबोधः स्यात्। अथ प्रातिपदिकानां घटादिपदानां घटत्वेन सकलघटवाचकत्वेऽपि घटोऽस्तीत्यादावस्तित्वान्विततद्घटव्यक्तिबोधः प्रथमयेति चेत् न। घटपदेन घटोपस्थितावस्तिपदेनास्तित्वोपस्थितावबाधितत्वात्तद्घटव्यक्तेर्घटत्वेन शाब्दभानसम्भवात् तद्व्यक्तित्वेन भानस्याप्रामाणिकत्वादिति प्रातिपदिकार्थस्य न कथमपि प्रथमार्थत्वं सम्भवतीति चेत्। अत्राहुः। घटो नील इत्यादौ विशेषणविभक्ते र्नीलपदोत्तरप्रथमाया अभेदोऽर्थः स घटादौ विशेषणीभूयान्वेतीति। तत्राभेदो यदि भेदत्वावच्छिन्नप्रतियोगिताकाभावत्वेन रूपेणार्थस्तदाऽप्रसिद्धिः। भेदत्वावच्छिन्नप्रतियोगिताकाभावाऽप्रसिद्धेः। यदि च भेदप्रतियोगिकाभावत्वेन तदा नीलभेदगगनोभयत्वावच्छिन्नाभाववति पीते नीलाभेदावगमप्रसङ्गः। यदि च नीलप्रतियोगिकभेदत्वावच्छिन्नाभावत्वेन तदा यत्किंचिन्नीलभेदवति नीले नीलाभेदानवगमप्रसङ्गः। यदि च नीलत्वावच्छिन्नप्रतियोगिताकभेदत्वावच्छिन्नाभावत्वेन तदा शक्त्यानन्त्यम्। नीलादेः पदार्थैकदेशे नीलत्वावच्छिन्नप्रतियोगिताकभेदे ऽनन्वयप्रसङ्गः नीलपटतात्पर्येण प्रयुक्तस्य घटो नील इति वाक्यस्य प्रामाण्यप्रसंगश्च। तस्माद्भेदो ऽत्यन्ताभावश्च द्वयमर्थस्तत्र भेदे नीलव्यक्तिः स्वरूपात्मिकया प्रतियोगितया भेदस्तु तद्भेदव्यक्ति-

स्वरूपावच्छिन्नया प्रतियोगितया अत्यन्ताभावेऽन्वेति। यदि निरवच्छिन्नप्रतियोगितया नीलादेः प्रतियोगिनो भेदादौ भानं भेदविशेषणतया भासमानस्य नीलादेर्भेदव्यक्तिस्वरूपनिष्ठप्रतियोगितावच्छेदकताया अनवच्छेदकत्वं च न सांप्रदायिकमित्युच्यते तदा तूभयावृत्तित्वोपलक्षितधर्मावच्छिन्नप्रतियोगिताकान्योन्याभावेऽत्यन्ताभावे च खण्डशश्शक्तिस्तदादिपदवत् स्मरणं तूपलक्षणोभयावृत्तित्वांशपरीहारेण प्रातिपदिकोपस्थापिततत्तद्व्यक्तित्वावच्छिन्नप्रतियोगिताकभेदत्वेन भेदविषयकमत्यन्ताभावत्वेनात्यन्ताभावविषयकं च भवति तत्र नीलादिपदार्थस्य तत्तद्व्यक्तित्वेऽन्वयः नीलान्विततादृशभेदत्वावच्छिन्नप्रतियोगितया भेदोऽत्यन्ताभावे ऽन्वेति तादृशात्यन्ताभावः समानविभक्तिकघटादिपदार्थेऽन्वेति। यदि नीलादेस्तद्व्यक्तित्वे पदार्थैकदेशेऽन्वयो न व्युत्पत्तिसिद्ध इत्युच्यते। तदा उभयावृत्तित्वोपलक्षितधर्मावच्छिन्नप्रतियोगितायां भेदेऽत्यन्ताभावे च त्रिषु सुब्विभक्तेः शक्तिस्तत्रोभयावृत्तित्वांशमपहाय प्रातिपदिकोपस्थापितव्यक्तीयतद्व्यक्तित्वावच्छिन्नप्रतियोगितायाः स्मरणम्। तादृशप्रतियोगितायां नीलादेः प्रकृत्यर्थस्यान्वयः नीलाद्यन्विततादृशप्रतियोगिताया भेदेऽन्वयः तथाविधान्वितभेदत्वावच्छिन्नप्रतियोगितासंसर्गेण भेदस्यात्यन्ताभावेऽन्वयस्तथाविधान्वितात्यन्ताभावस्य समानविभक्तिकघटादिपदार्थेऽन्वयः। एवमीदृशभेदात्यन्ताभावः प्रतियोगिस्वरूप एव यत्र प्रतियोग्यननुगतस्तत्रैव सामान्यधर्मावच्छिन्नभेदस्यात्यन्ताभावः

प्रतियोगितावच्छेदकस्वरूप इति स्वरूपभेदाभावस्तन्नीलादिव्यक्तिस्वरूपो नीलपदादिप्रातिपदिकार्थो दर्शितरीत्या भवति प्रथमार्थ इति । न च भेदस्याभावः प्रतियोगी न सम्भवति तेन सममविरोधात् । किं तु प्रतियोगितावच्छेदकमिति वाच्यम् । प्रतियोगितावच्छेदकसंबन्धेनैव प्रतियोगिनोऽभावविरोधित्वात् । तस्यावाप्यविकलत्वात्तद्यक्तित्वस्वरूपतादात्म्येन संबन्धेन तद्व्यक्तेः प्रतियोगिन्या विरोधित्वात् । न च तद्यक्तित्वस्य धर्मविधया प्रतियोगिताया अवच्छेदकत्वं संसर्गविधयेति कथं तेन संबन्धेन विरोधित्वमिति वाच्यम् । भेदे संसर्गविधया प्रतियोगिताया अवच्छेदकस्यैव धर्मविधया अवच्छेदकत्वात् । तादृशस्यैवावच्छेदकस्याभेदाभावत्वोपगमात् । तदभिसन्धानेन योग्यानुपलब्धिहेतुतावादे प्रत्यक्षालोके मिश्रैर्न हि यथा तादात्म्यमन्योन्याभावस्याभावस्तथान्योन्याभावोऽपि तदभावरूपः घटाप्रतियोगित्वादित्युक्तंभेदप्रतियोगितायाः संसर्गविधयावच्छेदकस्य तादात्म्यस्य धर्मविधयावच्छेदकात्मकान्योन्याभावविरहस्वरूपप्रदर्शनं संसर्गीभूतावच्छेदकधर्मीभूतावच्छेदकयोरैक्यं विना नोपपद्यत इति । गुरुचरणास्तु भवतु स्वरूपभेदाभावस्तद्व्यक्तिस्वरूपस्तथापि स न प्रथमार्थो मानाभावात् । घटो नील इत्यादौ स्वरूपभेदाभावात्मकतादात्म्यसंसर्गेणैव शाब्दबोधोपपत्तेः । न चाभेदस्य संसर्गत्वोपगमे स्वन्तनीलपदेन स्वन्तघटपदस्य पौर्वापर्यरूपायास्तद्व्याकाङ्क्षाया आकाङ्क्षायाः शाब्दप्रयोजकत्वे गौरवमधिकवर्णघटितत्वात् । अभेदस्य पदार्थत्वे नीलविशेषणकाभेदविशिष्य-

कबुद्धौ नीलपदस्य सुना सहाकाङ्क्षाया अभेदप्रकारक-घटविशेष्यकबुद्धौ तेनैव सुना सह स्वन्तघटपदस्याकाङ्क्षा-याः स्वप्रयोजकत्वस्वीकारे लाघवं नीलघटपदयोरेकत्वा-काङ्क्षायामप्रवेशेन तयोर्विशेष्यविशेषणभावव्यत्यासप्रयु-क्तस्याकाङ्क्षाधीहेतुताभेदस्य गुरुतरस्याप्रसक्तेरिति वा-च्यम्। नीलाभेदविधेयकघटोद्देश्यकबुद्धौ नीलघटपदयोः पौर्वापर्यस्वरूपाकाङ्क्षायाः प्रयोजकत्वस्य तत्रापावश्यक-त्वात्। अन्यथा नीलो घट इत्यादितो नीलाभेदविधेयक-बोधापत्तेः। न च नीलो घटो जलपूर्ण इत्यादौ जलपू-र्णत्वविधेयत्वबोधस्थलेऽभेदस्य प्रथमार्थत्वपक्षे घटे नीला-भेदविशेषणकान्वयबोधो दर्शितरीत्याऽऽकाङ्क्षाद्वयस्य प्र-योजकत्वेनैवोपपद्यते। भेदस्य संसर्गतापक्षे स्वन्तनील-घटपदयोरेकत्वाकाङ्क्षाप्रवेशे विशेष्यविशेषणभावव्यत्या-सप्रयुक्तं गौरवं दुष्परिहरमिति वाच्यम्। यतोऽभेदस्य सुबर्थत्वपक्षेऽपि स्वन्तघटपदस्य पदोत्तरत्वाद्यविशेषितेन सुना सहाकाङ्क्षा न तथाविधान्वयोपयोगिनी तथासति नीलः पटः घटो दण्ड इत्यादौ स्वन्तघटपदस्य दण्डो-त्तरसुना सहाकाङ्क्षाग्रहे घटे नीलाभेदान्वयबोधः स्या-दित्यवश्यं नीलपदोत्तरसुना सहाकाङ्क्षा वक्तव्या। त-थाचैकस्यामाकाङ्क्षायां नीलघटपदयोः प्रवेशे विशेष्यवि-शेषणभावव्यत्यासप्रयुक्तं गौरवं तत्रापि दुष्परिहरमिति। न च प्रथमान्तनीलपदप्रथमान्तघटपदयोराकाङ्क्षाज्ञा-नस्य नीलविशेषणकतादात्म्यसंसर्गकघटविशेष्य-कशाब्दं प्रति हेतुत्वे नीलघट इत्यादिकर्मधारयस्थले व्यभिचारस्तत्र स्वन्तनीलपदघटिताकाङ्क्षाज्ञानविरहा-

दिति वाच्यम्। कलशः कृष्ण इत्यादौ व्यभिचारवारणायैव अव्यवहितोत्तरोत्पत्तिकत्वं जन्यतावच्छेदकोऽवश्यं प्रवेशनीयमत एव कर्मधारयस्थले व्यभिचाराप्रसक्तेः। न च शिखी विनष्टः क्षुदुपहन्तुं शक्या सुरभिचन्दनमाघ्रातमित्यादौ विनष्टशक्याघ्रातानां तादात्म्यसंसर्गेण शिखिनि क्षुधि सुरभिचन्दने चान्वयो बाधित इति सामानाधिकरण्यानुपपत्तिरभेदस्य सुबर्थत्वपक्षे तस्य स्वाश्रयशिखावत्त्वेन स्वाश्रयोपहननवत्त्वेन स्वाश्रयसौरभवत्त्वेन संसर्गेणान्वयसम्भवाद्भवति सामानाधिकरण्यमिति वाच्यम्। ततः परम्परासंसर्गावच्छिन्नशक्तिकर्मतावतोऽभिधानात्। क्षुधो न द्वितीया तादृशस्य कर्मणस्तादात्म्यसंसर्गेणान्वयः क्षुधि निष्प्रत्यूह एव। शिखाविशिष्टे विनष्टस्य सौरभविशिष्टे चन्दने आघ्रातस्य च तादात्म्यसंसर्गेणान्वयः। शिखासौरभं विशेषणमादाय पर्यवस्यति। अत्रैवार्थे "सविशेषणे हि विधिनिषेधौ सति विशेष्यबाधे विशेषणमुपसंक्रामत" इति प्रमाणयन्ति तान्त्रिकाः। एवं युक्त्याऽभेदस्य विभक्त्यर्थे प्रतिहते अनुशासनमपि विभक्तीनां साधुत्वमात्रं ज्ञापयति। तथा हि। "लुपि युक्तवद्व्यक्तिवचने" इत्येकं सूत्रं लुप्ते प्रत्यये प्रकृतिलिङ्गवचने प्रयोक्तव्ये न तु लवण। यवागूरित्यादौ लवणादिपदवद्विशेष्यनिघ्नतया लिङ्गवचनान्तरप्रयोगः। यथा पञ्चाला नाम क्षत्रियाः नियतलिङ्गवचनान्तपुल्लिङ्गपञ्चालशब्दविषयास्तेषां निवासे जनपदे प्रवृत्तस्य तद्धितास्यो लुपि सति पञ्चाला जनपद इति तथा विदेहाः कुरवो मगधा मत्स्या अङ्गा

वङ्गाः कलिङ्गाः सुह्माः पुण्ड्रा इत्यादीत्यर्थकं "विशेषणा-नां चाजाते"रित्यपरं सूत्रं तद्विशेषणवाचिनां पदानां तद्वल्लिङ्गवचने स्यातां जातिवाचिपदं वर्जयित्वा तथा पञ्चाला रमणीयाः जातौ तु पञ्चाला जनपद एवं गो-दयोर्निवासग्रामे गोदौ बहुक्षीरघृतौ जातौ तु गोदौ ग्राम इत्यर्थकं तदेतत्सूत्रद्वयं पूर्वाचार्याणामनूद्य "तद-शिष्यं संज्ञाप्रमाणत्वादि"ति पाणिनिमुनिरसूत्रयत् । तत्प्रकृतिनियतलिङ्गवचनत्वं लुप्ततद्धितकानां पञ्चाला-दिशब्दानां तद्विशेषणपदानां च विशेष्यतुल्ययोगक्षेमं नि-यतलिङ्गवचनत्वं न शिष्यं न वक्तव्यम् । संज्ञा नियत-व्यवहारस्तत्प्रमाणकत्वादिति सूत्रार्थस्तथा च यथा क्ष-त्रियविशेषे प्रवर्तमानानां पञ्चालादिशब्दानां नियतपु-ल्लिङ्गबहुवचनत्वं व्यवहारेणैव तथा लुप्ततद्धितेऽपि व्यव-हारस्तु लिङ्गवचनादिनियतोऽपि न लिङ्गवचनार्थकः किं तु साधुत्वार्थः । अत एव नियतस्त्रीलिङ्गबहुवचनत्वे-नाप्शब्दस्य तद्विशेषणपदस्य च नियतपुल्लिङ्गबहुवच-नत्वेन दारशब्दस्य तद्विशेषणपदस्य व्यवहारो लिङ्गव-चनस्वरूपमर्थं विशेष्ये विशेषणे वा न तु क्वापि बोधयति यथाऽपो रसमय्यः-रामस्य दाराः पुण्यमया इति विशे-षणविभक्तीनां साधुत्वार्थतयोपपत्तौ निरर्थकत्वे तदनु-पपत्तिर्न भवतीति पदवाक्यरत्नाकरे प्राहुः । युज्यते चा-यमर्थः । स्वरूपभेदाभावस्य तद्व्यक्तिस्वरूपस्य प्रथमार्थ-त्वे नीलेऽपि यत्किञ्चिन्नीलव्यक्तिभेदसत्वान्नीलो न नील इति प्रयोगः स्यात् । न च तत्रापि तादृशाभेदसंसर्गा-वच्छिन्नप्रतियोगिताकभेदस्य नीले सत्वात्कथं न तथाप्र-

योग इति वाच्यम् । नञ्स्थलेऽन्वयितावच्छेदकावच्छिन्नप्रतियोगिताकत्वस्यैव भेदे भानोपगमात् । नीलत्वावच्छिन्नप्रतियोगिताकभेदस्य नीलेऽसत्वात् भवतु स्वरूपभेदाभावत्वस्य पदार्थतावच्छेदकतया तदवच्छिन्नप्रतियोगिताकभेदस्य नीले सत्वात्तथा प्रयोगो दुर्वार एवेति ।

यत्तु तिङ्निपाताभिहितकारकः प्रथमार्थस्तेन पचति तण्डुलः पच्यते छेत्तुं सांप्रतं वृक्ष इत्यादौ कर्तृत्वं कर्मत्वं प्रथमयाऽप्यभिधीयते । अत एव प्रातिपदिकार्थविशेष्यकतिङर्थान्वयबोधे प्रातिपदिकस्य प्रथमान्ततानियमः । तेन ब्राह्मणस्य पक्तृत्वसंप्रदानत्वोभयविवक्षायां पचति ब्राह्मणाय देहीति न प्रयोगः तिङा प्रथमया च कर्तृतात्वेनैकाकर्तृता प्रतिपाद्यते । एकत्वेनैकत्वसंख्येव । एवं प्रातिपदिकार्थविशेष्यकतिङर्थप्रकारकान्वयबोधे तिङ्जन्याया इव सुब्जन्याया अपि उपस्थितेः सहकारित्वमत एव चैत्रः पचत इति न प्रयोगः न वा पचति ब्राह्मणाय देहीत्यस्य शतृशानजापत्त्या वारणेऽपि पच्यति देवदत्ताय देहीत्यादि प्रयोगो दुर्वारः । चतुर्थ्यास्तिङर्थकारकानभिधायित्वात् । न च चैत्रः सुन्दर इत्यादौ न कारकार्थोपपत्तिरिति वाच्यम् । तत्राप्यभ्याहृतास्तिक्रियाकर्तृत्वस्य प्रथमयाऽभिधानात् । "अस्तिर्भवतिपरः प्रथमपुरुषोऽप्रयुज्यमानोऽस्ती"ति कात्यायनस्मरणात् । न च रामो रावणस्य कल्को म्लेच्छस्य हन्तेत्यादौ कथं क्रियापदाध्याहारः अस्तीत्यर्थस्यान्वेतुमयोग्यत्वादिति वाच्यम् । अत्र वाक्यभेदस्यावश्यकत्वे आसीदिति रामो भविष्यतीति कल्किन्यध्याहारसम्भवात् भवतिपर इत्य-

स्योपलक्षणत्वात् । न च भगवतो दशावताराः । 'मत्स्यः कूर्मो वाराहो नरसिंहो वामनो रामो बलभद्रो बुद्धः कल्की चेत्यादिविभागवाक्ये आसीदस्ति भविष्यतीत्येकतमस्याध्याहारासम्भवात् केषां चिदवताराणामतीतत्वात् कस्य चिद्विद्यमानत्वात् कस्य चिद्भावित्वादिति वाच्यम् । उद्देशवाक्यार्थे विभागवाक्यार्थस्यान्वयविवक्षणे सन्तीध्याहारसम्भवात् । विभागवाक्यार्थे उद्देशवाक्यार्थस्यान्वयविवक्षणे तु अस्तिसन्तीत्येवाध्याहारसम्भवात् तत्रैकवचनान्तबहुवचनान्तयोस्तिङन्तयोरुभयोरपि साधुत्वात् । न चातीतानागतयोः कथं वर्त्तमानसत्ताया अध्याहृततिङन्तार्थस्यान्वय इति वाच्यम् । वर्तमानत्वाविवक्षणेऽपि धात्वर्थेऽस्य सम्बन्धे विवक्षिते लट्प्रयोगस्य साधुत्वात् । "वारिदः सुखमाप्नोति सुखमक्षय्यमन्नद"इत्यादिदर्शनात् । न च"हंसीव धवला कीर्ति"रित्यादौ धवलपदात्कीर्त्तिपदादध्याहृतास्तिपदार्थस्वरूपभवनकर्तृत्वार्थिका प्रथमोत्पद्यतां हंसीपदात्कथं सेति वाच्यम् । तत्रापीवनिपातार्थभवनकर्तृत्वार्थकतया प्रथमाया उपपत्तेः । न चैवनिपातस्य कर्तृत्वार्थकत्वोपगमे करणकर्मत्वार्थकत्वोपगमः स्यात् । तथा च "शरैरुस्रैरिवोदीच्यानुद्धरिष्यन्रसानिवे"त्यादाविवनिपातेन करणकर्मत्वाभिधानात् तृतीयाद्वितीयानुपपत्तिरिति वाच्यम् । दर्शितस्थले इव निपातस्य सादृश्यमात्रार्थकत्वात् करणकर्मत्वाद्यर्थकत्वे मानाभावात् । उस्रे रसानित्यादौ समानलिङ्गवचनत्वेन साधुत्वार्थिका तृतीया द्वितीया । तेन उस्रसदृशैश्शरै रससदृशानुदीच्यानिति प्राथमिको बोधः ।

अत एवेवंपदद्वयं सङ्गच्छते। ततो रविकर्तृकोत्खनकरणकसमुद्रोदरसुखस्थितपाषाणाकरक्षेदीनांकर्मकर्ताऽद्रिभ्य-
णकर्त्ता रघुरिति विशिष्टवाक्यार्थबोधस्तत्र तृतीयाद्वितीयार्थयोः करणत्वकर्मत्त्वयो ड्वीत्वर्थेनान्वयात्। तृतीयाद्वितीययोर्नानुपपत्तिरिति कालापेरुक्तम्। तदसत्। घटो नास्तीत्यादौ घटात्यन्ताभावशाब्दे प्रथमया कर्तृत्वाभिधानासम्भवात्। यदि च तत्रास्तिधात्वर्थान्वितति‌ङर्थात्यन्ताभावविशेष्यतया घटः प्रतीयते तदाऽपि प्रथमया कर्तृत्वाभिधानमसम्भवि प्रथमोक्तकर्तृत्वस्य नञर्थान्वयासम्भवात्। न च तिङ्प्रथमाभ्यामेकमेवकर्तृत्वमुपस्थाप्यते। तत् नञर्थे सघटे विशेषणतयाऽन्वेतीति प्रथमया कर्तृत्वाभिधानं निराबाधमिति वाच्यम्। प्रथमार्थाभावस्य प्रातिपदिकार्थेऽन्वयासम्भवात्। प्रकृत्यर्थे प्रत्ययार्थाभावान्वयस्याव्युत्पन्नत्वात्। न च तत्राश्रयत्वस्वरूपकर्तृत्वाभाव एव तिङ्प्रथमयोरर्थस्तस्य घटेऽन्वयः नञ्पदं तात्पर्यग्राहकमत एव तिङर्थान्वयिनि प्रथमान्तार्थे तिङर्थसंख्यान्वयस्य व्युत्पन्नत्वाद्घटौ घटा वा नास्तीति न प्रयोग इति वाच्यम्। तथासति कर्तृत्वस्यैकदेशतया तत्र धात्वर्थानन्वयप्रसङ्गात्। धात्वर्थान्वितकर्तृत्वाभावस्य तिङर्थत्वाभ्युपगमे तण्डुलं पचति नेत्यादौ धात्वर्थस्यैकदेशतया तत्र तण्डुलकर्मत्वानन्वयप्रसङ्गात्। धात्वर्थान्विततिङर्थान्वयिनि तादृशतिङर्थान्वितनञर्थान्वयिनि च प्रथमान्तार्थे तिङर्थसंख्यान्वयस्य व्युत्पन्नत्वान्न घटौ घटा वा नास्तीति प्रयोग इति। वस्तुतस्तु कर्तृत्वस्य तिङर्थत्वमावश्यक-

मेव पचतीत्यादौ प्रथमां विना तिङा प्रतीयमानत्वात् । प्रथमार्थत्वं तु न युज्यते तिङं विना प्रथमया क्वाप्यप्रतीयमानत्वादन्यलभ्यत्वाच्च । पटो न घट इत्यादौ पटघटभेदान्वयबुद्धौ जायमानायां घटपदोत्तरप्रथमायाः कथमपि कर्तृत्वप्रत्यायकत्वं न सम्भवतीति न कर्तृत्वं प्रथमार्थं इति पचतीत्यादौ तृतीयाया असाधुत्वात् षष्ठ्या असाधुत्वात्षष्ठ्यर्थस्याविवक्षणाद्वा द्वितीयादेरर्थस्यायोग्यत्वात् प्रयोगबाधे "न केवला प्रकृतिः प्रयोक्तव्ये" ति साधुत्वार्थं प्रथमोपात्ता प्रथमा चैत्रादिपदानन्तरं प्रयुज्यत इति । लिङ्गं पुंस्त्वं स्त्रीत्वं क्लीवत्वं च तत्र शोणिताधिकशुक्रसमवेतप्राणित्वं पुंस्त्वम् । शुक्राधिकशोणितसमवेतप्राणित्वं स्त्रीत्वम् । समशुक्रशोणितोभयसमवेतप्राणित्वं क्लीवत्वम् । तथा च निरुक्तम् । शुक्रातिरेके पुमान् भवति शोणितातिरेके स्त्री भवति द्वाभ्यां समेन षराढो भवतीति । चतुर्भुजो हलायुधो मकरध्वज इत्यादौ पुंस्त्वम् अदितिः श्रोधेनुरित्यादौ स्त्रीत्वम् मार्दङ्गिकं कुण्डलि गायनं छन्नलमित्यादौ क्लीवत्वं प्रथमाऽभिधत्त इति लिङ्गं प्रथमार्थोऽनन्यलभ्यत्वात् । घटादिशब्दे तु पुंस्त्ववाचकसुप्प्रकृतित्वं पुंस्त्वमौपचारिकमिति । एवं तटीत्यादौ तटशब्दे ईत्वेन स्त्रीत्ववाचकस्य ङीप्प्रत्ययस्य प्रकृतित्वं स्त्रीत्वम् । भुजेत्यादौ भुजशब्दे आत्वेन स्त्रीत्ववाचकस्य टाप्प्रत्ययस्य प्रकृतित्वं स्त्रीत्वं दधीत्यादौ दधिशब्दे नपुंसकत्ववाचकस्य लोपस्मारितसुपः प्रकृतित्वं नपुंसकत्वं कुण्डमित्यादौ कुण्डशब्दे नपुंसकत्ववाचकस्यामृस्मारितसुपः प्रकृतित्वं नपुंसकत्वं सर्वत्र शब्दे-

व्यौपचारिकमिति। परिमाणं गुरुत्वं परिमितिश्च द्रोणो व्रीहिरित्यादौ गुरुत्वविशेषवाचिनो द्रोणशब्दात्प्रथमा गुरुत्वमभिधत्ते। प्रथमार्थगुरुत्वे द्रोणपदार्थस्याभेदेनान्वयस्तादृशगुरुत्वं व्रीहावन्वेति। एवं द्रोणाभिन्नगुरुत्ववान् व्रीहिरिति वाक्यार्थबोधः। वितस्तिः शङ्कुरित्यादौ द्वादशाङ्गुलपरिमाणवाचिनो वितस्तिशब्दात् प्रथमा परिमाणमभिधत्ते। प्रथमार्थपरिमाणे वितस्तिशब्दार्थस्याभेदेनान्वयस्तादृशपरिमाणस्य शङ्कावन्वयः एवं वितस्त्यभिन्नपरिमाणवान् शङ्कुरिति वाक्यार्थबोध इत्यनन्यलभ्यत्वाद् गुरुत्वत्वेन गुरुत्वं परिमाणत्वेन परिमाणं च प्रथमार्थ इति अत्र गुरुत्वविशेषविशिष्टवाचिनो द्रोणशब्दस्यार्थः व्रीहौ परिमाणविशेषविशिष्टवाचिनो वितस्तिशब्दस्यार्थः शङ्कौ तादात्म्येनान्वेति। तावतैव व्रीहौ गुरुत्वविशेषवैशिष्ट्यस्य शङ्कौ परिमाणविशेषवैशिष्ट्यस्यावगमसम्भवात्। गुरुत्वत्वेन गुरुत्वस्य परिमाणत्वेन परिमाणस्य भानमप्रामाणिकमेवेति गुरुत्वं परिमाणं च न प्रथमार्थ इति पदवाक्यरत्नाकरे गुरुचरणाः। युज्यते चायमर्थः। तथा हि। यदि परिमाणं प्रथमार्थस्तस्य प्रकृत्यर्थविशेषितस्य प्रातिपदिकान्तरार्थेऽन्वयस्तदा राज्ञः पुरुष इत्यादाविव द्रोणो व्रीहिरित्यादौ समानविभक्तिकतानियमो न स्यात्। तथा च द्रोणो व्रीहिं व्रीहिणा-व्रीहे व्रीहौ वेत्यादिप्रयोगः स्यादिति। यदि च द्रोणो व्रीहिः वितस्तिः शङ्कुरित्यादौ गुरुत्वत्वेन गुरुत्वं परिमाणत्वेन परिमाणं प्रतीयत एव तदा गुरुत्वं परिमाणं च प्रथमार्थ एवानन्यलभ्यत्वात्। यदि च प्रकृत्यर्थविशे-

षितयोस्तयोः प्रथमार्थयोः समानविभक्तिकपदान्तरार्थ-एवान्वयस्तदा तादात्म्यान्वय इव गुरुत्वपरिमाणान्वयेऽपि समानविभक्तित्वं तन्त्रमभ्युपेयमिति। । वचनमेकत्वं द्वित्वं बहुत्वं च तत्रैकत्वं क्वचित्प्रकृत्यर्थतावच्छेदकव्यापकसंसर्गेण प्रकृत्यर्थेऽन्वेति यथा परमेश्वर इत्यादौ समग्रैश्वर्यप्रकृत्यर्थतावच्छेदकव्यापकसमवायेनैकत्वं परमेश्वरेऽन्वेति । क्वचित्पदान्तरार्थव्यक्तिविशेषघटितेन प्रकृत्यर्थतावच्छेदकव्यापकेन संसर्गेण प्रकृत्यर्थेऽन्वेति यथा पशुना रुद्रं यजेत इत्यादौ तद्यागव्यक्तिकर्मपशुत्वव्यापकसमवायेनैकत्वं पशावन्वेति । ईदृशसंसर्गेणैकत्ववैशिष्ट्यमेव सजातीयद्वितीयराहित्यं ज्ञापयति। एवं द्वित्वमपि आश्विनेयावित्यादावश्विनीपुत्रत्वप्रकृत्यर्थतावच्छेदकव्यापकसंसर्गेण द्वित्वमाश्विनेययोरन्वेति। सारस्वतौ मेषौ भवत इत्यादौ मेषकर्तृकभावनाक्षिप्तायां यागभावनायां यस्यां सरस्वतीदेवतयोर्मेषयोः कर्मतयान्वयस्तद्भावनाकर्ममेषनिष्ठान्योन्याभावप्रतियोगितानवच्छेदकपर्याप्तिसंसर्गेण द्वित्वं मेषयोरन्वेति। ईदृशसंसर्गेण द्वित्ववैशिष्ट्यमेव सजातीयतृतीयराहित्यं ज्ञापयति। इत्थं संसर्गवैचित्र्ये णैकत्वद्वित्वयोरन्वयसम्भवेन नाव्यावर्तकत्वं न वा द्विपशुको रुद्रयागः न च त्रिमेषकः सरस्वतीयागः यागस्वर्गयोर्हेतुहेतुमद्भावे एकत्वद्वित्वयोर्योगे कर्मतायां वा वैशिष्ट्यं प्रवेशनीयमित्यादिकं सुधीभिरूह्यमिति। बहुत्वं तु नेदृशसंसर्गेणान्वेति सजातीयराहित्यस्य ज्ञापयितुमशक्यत्वात् बहुत्वस्य सकलसंख्याव्यापकत्वात् । कपिञ्जलानालभेतेत्यादौ बहुत्वत्वेन त्रित्वस्य

बोधस्तात्पर्येणैव संसर्गवैचित्र्येण त्रित्वबोधनासम्भवात्। एवं यत्र प्रकृत्यर्थतावच्छेदकमेकं तत्र प्रकृत्यर्थतावच्छेदकव्याप्यसंसर्गेण द्वित्वबहुत्वयोरन्वयस्तेन घटाकाशयोर्द्वित्वस्य घटपटाकाशानां बहुत्वस्य च गगने सत्वादाकाशावाकाशा इति न प्रयोगः यत्र प्रकृत्यर्थतावच्छेदकं नाना धवखदिराविव्यादौ तत्र द्वन्द्वस्थले व्युत्पत्तिवैचित्र्येण धवत्वखदिरत्वनिष्ठान्योन्याभावप्रतियोगितानवच्छेदकपर्याप्त्या द्वित्वं तयोः प्रकृत्यर्थतावच्छेदकयोरन्वेति तादृशपर्याप्त्या स्वाश्रयप्रकृत्यर्थतावच्छेदकवत्वसम्बन्धेन प्रकृत्यर्थयोर्वाऽन्वेति। एवं बहुत्वमपि धवखदिरपलाशा इत्यादौ प्रकृत्यर्थतावच्छेदकेषु प्रकृत्यर्थेषु वा दर्शितरीत्याऽन्वेति। एवं वामे बहून् कुशान् कृत्वा दक्षिणे तु कुशत्रयमित्यादावपि तात्पर्यविशेषेण बहुशब्दार्थतावच्छेदके त्रित्वे पात्पर्यविशेषेण बहुवचनार्थत्रित्वस्यान्वयः किं वा वचनार्थबहुत्वात्मकत्रित्वविशिष्टेषु कुशेषु बहुशब्दार्थत्रित्वविशिष्टस्य तादात्म्येन निराकाङ्क्षत्वमिति बहुशब्दप्रयोगसार्थक्याय कुशविशेषणं त्रित्वे तथान्वयविशेष्ये योग्यताया इव निराकाङ्क्षताया अपि विशेषणान्वयप्रयोजकत्वात्। एवं वामे नव कुशधारणं सांप्रदायिकं युज्यते विशिष्टानामिति। एवं यदाऽऽदिशन्ति पूज्यपादा इत्यादौ पादविशेषणपूजायामनिर्धारितविशेषस्य बहुत्वस्य विवक्षितस्य बहुवचनार्थस्य सविशेषणे हीतिन्यायादन्वयः। एवं गोदौ ग्राम इत्यादौ द्वित्वस्य गोदयोर्निवासग्रामविशेषणीभूतयोरन्वयो निराबाध एव। गोदशब्दोऽपि नासत्यशब्द-

वन्नित्यद्विवचनान्तोऽपि न द्वित्वविशिष्टवाचकः येन निराकाङ्क्षतया नान्वयः प्रसज्येत । ननु गगनपदस्य शब्दविशिष्टवाचकतया गगनपदार्थैकदेशे शब्दे बहुत्वान्वयविवक्षायां गगनानीति प्रयोगः स्यात् । एकदेशेऽन्वयानभ्युपगमे पूज्यपादा इत्यत्रैकदेशे पूजायां बहुत्वान्वयो न स्यात् । एवं वेदाः प्रमाणमित्यत्र प्रमाणत्वेनैकत्वान्वयः स्यादिति चेत् । व्युत्पत्तिवैचित्र्येणान्वयोपगमेन समीहितसिद्धौ नैकदेशाऽन्वयोऽभ्युपेयते पूज्यपादा इत्यत्र पूजाविशिष्टपादे बहुत्वान्वयः पादे बाधात्पूजायां पर्यवस्यति शिखी विनष्ट इत्यादिवत् । एवं प्रमाणमित्यत्र प्रमाविशेषितल्युडर्थकरणे एकत्वान्वयः करणे बाधात्प्रमायां पर्यवस्यति । तत्रापि स्वाश्रयशाब्दत्ववत्वसम्बन्धेन प्रमायामन्वेति सविशेषणे हीतिन्यायात् तदेव विशेषणं यत्सामान्यधर्मवतः व्यावर्तयति यथा घटे नीलादिः नीलान्यघटात् स्वाश्रयघटं व्यावर्तयति । शब्दस्तु नेदृशं येन गगनानीति प्रयोगः स्यात् प्रजा प्रमा चेदृशमेव विशेषणमिति सविशेषणे हीतिन्यायस्य विशेष्ये योग्यताया इव आकाङ्क्षाया अपि बाधः प्रापक एव सति विशेष्यबाधे इत्यस्य विशेष्यान्वयाभावे सतीत्यर्थः । एवं ग्रामे बहून्कुशानित्यत्र बहुत्वविशिष्टकुशे बहुशब्दार्थस्य बहुत्वविशिष्टस्य तादात्म्येनान्वयो निराकाङ्क्ष इति कुशविशेषणबहुत्वेऽन्वयः पर्यवस्यति । बहुशब्दोत्तरबहुवचनं साधुत्वार्थमेव कुशशब्दोत्तरबहुवचनाबहुशब्दाच्च त्रित्वोपस्थितिस्तात्पर्यविशेषेणैवेति । क्वचिदेकत्वस्याप्येवं रीत्याऽन्वयः । यथा

वेदाः प्रमाणमित्यादौ प्रकृत्यर्थतावच्छेदकप्रमाणत्वे तद्द्वारा प्रमाणे वा एकत्वस्यान्वयः। यत्र तु "विंशत्याद्याः सदैकत्वे सर्वाः संख्येयसंख्ययोरि"ति कोशेनानुशिष्टस्यैकवचनस्यार्थं एकत्वं विंशतित्वादिसंख्यायामन्वेति। यथा विंशति ब्राह्मणाः शतं धार्तराष्ट्राः सहस्रं भानोः करा इत्यादौ विंशतित्वादौ बहुत्वान्वयविवक्षणे तु बहुवचनमपि प्रमाणं यथा "असंख्याताः सहस्राणि ये रुद्रा अधिभूम्यामि"ति श्रुतौ "तिस्रः कोट्यो ऽर्धकोटी च तीर्थानां वायुरब्रवीदि"ति पुराणे।

किमेकयैव विंशत्या बाहुभिस्त्वं विकत्थसे।
पश्य रावण नाराचैश्छिन्नाश्च कति विंशतीः॥

इत्यादौ लोके च तथा प्रयोगदर्शनात्। ते शतानि वयं पञ्चेत्यत्र बहुवचनान्ततच्छब्दविशेषणात्। संख्येयवाचिनः शतशब्दाद्बहुवचनं बहुवचनान्तास्मच्छब्दविशेषणात्पञ्चशब्दाद्बहुवचनञ्च साधुत्वार्थमेव। एवं दशशतान्यम्भोजसंवर्तिका इत्यादौ संख्येयवाचिनो दशशब्दस्यार्थः संख्येयवाचिशतशब्दार्थे तादात्म्येनान्वेति। शिखी विनष्ट इत्यादाविव सविशेषणेहीति न्यायेन शतत्वसंख्यामादाय पर्यवसानं शतत्वे दशत्वविशिष्टतादात्म्यावगमे सहस्रत्वसंख्यालाभ इति। जातिगतैकत्वविवक्षायामेकवचनं बहुवचनं च प्रमाणम्। "जात्याख्यायामेकस्मिन्बहुवचनमन्यतरस्यामि"त्यनुशासनात्। जातिरूपे एकस्मिन्नर्थे बहुवचनमेकवचनं च स्यादिति सूत्रार्थः। यथा सम्पन्नो व्रीहिः सम्पन्ना व्रीहय इत्यादौ व्रीहित्वजातावेकत्वमेकवचनबहुवचनाभ्यां प्र-

त्याय्यते। तत्राप्येकजातिर्विवक्षिता तत्रैवायं वचनव्यवस्था एकजातिविवक्षणात् सम्पन्नौ व्रीहियवावित्यादौ नैकवचनबहुवचने। एको व्रीहिरित्यादौ न बहुवचनं "संख्यायोगे प्रतिषेधो वक्तव्य" इतिवार्तिकेन निषेधात्। एवं ब्राह्मणेन हतः पततीत्यादौ ब्राह्मणत्वजाताविकत्वमन्वेति ब्राह्मणत्वस्वरूपैकजातिमतः सामान्येन हननान्वयविवक्षणात् ब्राह्मणसामान्यकर्तृकस्यैव हननस्य पातित्यप्रयोजकत्वं न तु ब्राह्मणविशेषकर्तृकस्य। एवं गृहं संमार्ष्टीत्यादौ गृहत्व एवैकत्वमन्वेति गृहसामान्यकर्मत्वस्यैव संसर्गोऽन्वयान्न तु गृहविशेषकर्मत्वस्येति। "अस्मदो द्वयोश्च" त्यनुशासनेनाहं ब्रवीमि आवां ब्रूव इत्यर्थेऽन्यतरस्यां वयं ब्रूम इति बहुवचनमस्मदर्थान्वितमेकत्वं द्वित्वं चाभिधत्ते। "सविशेषणस्य प्रतिषेधो वक्तव्य" इति वार्तिकेन विशेषणयोगे बहुवचनस्य निषेधः यथा देवदत्तोऽहं ब्रवीमीत्यादौ। युष्मदि गुरावेकेषामित्यनुशासनेन त्वं गुरुरावां गुरू इत्यर्थेऽन्यतरस्यां बहुवचनं यूयं गुरव इत्यादौ युष्मदर्थान्वितमेकत्वं द्वित्वं चाभिधत्ते। "फल्गुनी प्रोष्ठपदानां च नक्षत्रे" इत्यनुशासनेन फल्गुनीप्रोष्ठपदाभ्यां शब्दाभ्यामुत्तरमन्यतरस्यां बहुवचनं फल्गुनीनक्षत्रगतं प्रोष्ठपदानक्षत्रगतं च द्वित्वमभिधत्ते। नक्षत्रग्रहणेन फल्गुन्यौ माणविके इत्यादौ न बहुवचनम्। "छन्दसि पुनर्वस्वोरेकवचनम्" इत्यनुशासनेन "विशाखयोश्च" इत्यनुशासनेन च पुनर्वसुशब्दाद्विशाखाशब्दाच्चोत्तरमन्यतरस्यामेकवचनं पुनर्वसुनक्षत्रगतं विशाखानक्षत्रगतं च द्वित्वमभिधत्ते छ-

न्दसि यथा पुनर्वसुर्नक्षत्रमदितिर्देवता पुनर्वसू नक्षत्रमदितिर्देवता यथा वा विशाखा नक्षत्रमिन्द्राग्नी देवता विशाखे नक्षत्रमिन्द्राग्नी देवता। लोके तु पुनर्वसूविशाखाशब्दौ नित्यद्विवचनान्तौ नासत्यशब्दवत्। "तिष्यपुनर्वस्वोर्नक्षत्रद्वन्द्वे बहुवचनस्य द्विवचनं नित्यम्" इत्यनुशासनेन तिष्यश्च पुनर्वसू चेति विग्रहसमानार्थकात् तिष्यपुनर्वसू इति द्वन्द्वादुत्तरं द्विवचनं तिष्ये पुनर्वस्वोश्च वर्तमानं बहुत्वमभिधत्ते। फल्गुनीसूत्रान्नक्षत्रग्रहणेऽनुवर्तमानेऽस्मिन्सूत्रे पुनर्नक्षत्रग्रहणं पर्यायेणापि द्वन्द्वं सूचयति। तेन पुष्यपुनर्वसू सिध्यपुनर्वसू इत्यादिद्वन्द्वेऽपि द्विवचनं तथा नित्यग्रहणं बहुवचनं निषेधति। बहुवचनस्येति विशेषोपादानं तिष्यपुनर्वस्विवति क्लीवैकवचनान्तद्वन्द्वं सूचयति ज्ञापयति च सर्वो द्वन्द्वो विभाषैकवद्भवतीति क्लीवैकवचनान्तज्ञापनेन क्लीवद्विवचनान्तद्वन्द्वस्य निषेधोऽवगम्यते। तेन तिष्यपुनर्वसुनी इति न द्वन्द्वः। जात्याख्यायामित्यादितिष्यपुनर्वस्वोरित्यन्तसूत्राणां तात्पर्यार्थाः काशिकासंमताः प्रदर्शिताः। एवं तिङर्थानामेकत्वादीनां प्रथमान्तार्थेऽन्वयः भावाख्यातस्थले तिङर्थभावनाया विरहात् तदन्वयिप्रथमान्तार्थासम्भवान्न तिङर्थसंख्यान्वयसम्भव इति चैत्रेण स्थीयते इति साधुत्वार्थमेकवचनं भावाख्यातस्थले न तु द्विवचनबहुवचने। फणिभाष्यकृतस्तु उष्ट्रासिका आस्यन्ते हतशायिकाः शय्यन्ते इति भावाख्यातबहुवचनं दर्शयन्ति स्म। तेषामयमाशयः। भावाख्यातस्थले एकत्वादिसंख्या धात्वर्थेऽन्वेति। न च पच्यते

चैत्रेणेत्यादौ धात्वर्थव्यापाराणां बहुत्वात्कथमेकत्वान्वय इति वाच्यम्। व्यापाराणां बहुत्वेऽपि पूर्वापरीभूतानां तेषामेकबुद्धिविषयतयैक्यसम्भवात्। बुद्धिगतैकत्वस्य स्वाश्रयविषयत्वसंबन्धेन व्यापारेष्वन्वयसम्भवात्। तदुक्तम्।

गुणभूतैरवयवैः समूहः क्रमजन्मनां।
बुद्ध्या प्रकल्पिताभेदः क्रियेति व्यपदिश्यते॥

इति पूर्वापरीभूतं भावाख्यातमाचष्टे। यथा पचति व्रजतीत्युपक्रमप्रभृत्यपवर्गपर्यन्तमिति निरुक्तमप्यसुमर्थं संवदति। न चैकबुद्धिविषयतया व्यापाराणामैक्ये भावाख्याते कथं द्विवचनबहुवचनोपपत्तिरिति वाच्यम्। तादृशव्यापाराणां पुनः सम्भवे बुध्यन्तरविषयतया तथा द्वित्वान्वयसम्भवात् द्विवचनस्य पुनः पुनः सम्भवे पुनर्बुध्यन्तरविषयतया तथा बहुत्वान्वयसम्भवात् बहुवचनस्य चोपपत्तेः। एवमास्यन्ते इत्यादौ उपवेशनव्यापाराणां मुहुरन्तरोत्थाने त्रिचतुःकृत्वो जातानां बहुतया बहुवचनोपपत्तिः। शय्यन्ते इत्यत्रापि शयनव्यापाराणां मुहुरन्तराजागरणे त्रिचतुःकृत्वो जातानां बहुतया बहुवचनोपपत्तिः। इत्थं चोपवेशनक्रियाविशेषणस्य उष्ट्रासिकाशब्दस्य शयनक्रियाविशेषणस्य हतशायिकाशब्दस्य बहुवचनान्तत्वं बहुत्वविशिष्टव्यापारे बहुत्वान्यसंख्याविशिष्टस्य तादात्म्येनान्वयायोगात्समानवचनत्वं तन्त्रम्। उष्ट्रासनसदृश उष्ट्रासिकाऽर्थः। हतशयनसदृशो हतशायिकार्थ इति उष्ट्रासनसदृशानि वर्तमानासनानि हतशयनसदृशानि वर्तमानशयनानीति वाक्यार्थबोधः। नन्वेवं धात्वर्थे संख्यान्वयोपगमे लिङ्गसंख्यान्वयायोग्यत्व-

मसत्वं व्याहन्येत । तत्रापि लिङ्गान्वयायोग्यत्वस्य घट-पटादिप्रातिपदिकादिसाधारणतया संख्यान्वयायोग्य-त्वस्यैवासत्वशब्दार्थत्वादिति चेत् । साक्षात्संख्यान्वया-योग्यत्वमसत्वं धात्वर्थस्य बुद्धिद्वारा संख्याऽन्वयित्वेऽपि निरुक्तासत्वमव्याहतमेव । न चैवं वेदाः प्रमाणमित्यादौ संख्यायाः प्रमितिकरणे साक्षादनन्वयादसत्वं स्यादिति वाच्यम् । प्रमाणानीत्यादौ प्रमाणे साक्षात्संख्यान्वया-दयोग्यताया विरहात् । अयोग्यतापर्यन्तधावनेन क्वचि-त्संख्याया अनन्वयेऽपि नासत्वमिति । यद्वा प्रातिपदि-कार्थत्वं सत्वं तदभावोऽसत्वं तच्च धात्वर्थे निराबाध-मेव । अत एव प्रातिपदिकार्थः सत्ता इति काशिकावृ-त्तिस्तत्र प्रातिपदिकार्थ इति भावप्रधानो निर्देशस्तेन प्रातिपदिकप्रतिपाद्यता सत्तेत्यवगम्यते । प्रातिपदिका-र्थोदाहरणमुच्चैर्नीचैरित्यपि तत्र वृत्तौ दृश्यते । अन्यथा-लिङ्गसंख्यान्वययोग्यत्वरूपसत्वस्योदाहरणमव्ययस्थलेऽ-लग्नं स्यादिति । तथा च सूत्रे प्रातिपदिकार्थोक्तिर्यत्र लिङ्गाद्यन्वययोग्यो नार्थस्तत्रापि साधुत्वार्थं प्रातिपदिक-संज्ञाबलात्प्रथमा भवतीति ज्ञापनार्थमिति । एवं सुऔ-जस् इत्यत्र उकारजकारावनुबन्धौ न वाचकताकुक्षिप्र-विष्टौ श्रीकृष्णस्त्राता इत्यत्र श्रूयमाणस्य कृष्णः पाल-यितेत्यादौ विसर्गभावं प्राप्तस्यापि सकारस्य रुत्वेन रू-पेण पुंस्त्वैकत्ववाचकत्वं सारस्वतौ मेषौ भवत इत्या-दौ श्रूयमाणस्यावौत्यादौ दीर्घैकारभावं प्राप्तस्याप्यौका-रस्यौत्वेन औटःसाधारणेन रूपेण पुंस्त्वद्वित्ववाचकत्वम्। एवं सुमनसश्छिदिवे इत्यादौ श्रूयमाणस्य सुमनसो ना-

के इत्यादावेकत्वाभावं प्राप्तस्यापि अस असत्वेन असस्-साधारणेन रूपेण पुंस्त्वबहुत्ववाचकत्वं लिङ्गवाचकता तु असः जस्शस्ङसिङस्साधारणेनास्त्वेन रूपेण बोध्या । एवं सुबन्तस्यापि लिङ्गसंख्यावाचकतावच्छेदकं साधारणं रूपं सुधीभिरूह्यमिति द्वितीयादीनां लिङ्गसंख्यार्थकत्वम् । सूत्रे मात्रग्रहणं प्रथमायां कर्मत्वाद्यर्थकत्वव्यवच्छेदमुखेन प्रथमार्थस्य सर्वसुवर्थत्वं ज्ञापयत्सूचयति ।

इति विभक्त्यर्थनिर्णये सम्बोधनेतरप्रथमार्थनिर्णयः ।

सम्बोधनमपि प्रथमार्थस्तथा चानुशासनम् ॥

"सम्बोधने चे"ति। सबोधनं बोधोद्देश्यकेच्छा तत्र ज्ञानमिच्छा च खण्डशः प्रथमार्थः ।तत्र प्रातिपदिकार्थः समवेतत्वसम्बन्धेन ज्ञानेऽन्वेति । प्रातिपदिकार्थान्विते ज्ञाने उद्देश्यतासम्बन्धेनेच्छा ऽन्वेति ज्ञानं च विशिष्टविषयतासम्बन्धेन वाक्यार्थे ऽन्वेति । एवं प्रातिपदिकार्थसमवेतज्ञानस्योद्देश्यतया ज्ञानसमवायितयोद्देश्यत्वस्वरूपं सम्बोध्यत्वमर्थतः प्रातिपदिकार्थस्य प्रतीयते एतदेव सम्बोध्यत्वं काशिकायामाभिमुख्यपदेनोक्तम् । एवं सति ब्रह्मन् पालयेत्यादौ ब्रह्मसमवेतेष्टज्ञानविषयएकत्वकर्तृकमाशंसाविषयपालनमिति शाब्दिकस्य ब्रह्मसमवेतेष्टज्ञानविषय आशंसाविषयपालनकर्तैकत्वमिति तार्किकस्य शाब्दबोधः । एवं यादृशरूपावच्छेदेन सम्बोध्यत्वं प्रथमया प्रत्याय्यते तादृशरूपविशिष्टमेव युष्मदा परामृश्यते सम्बोध्यतावच्छेदकोपलक्षितधर्मविशिष्ट एव युष्मत्पदशक्तेः। देव त्वं पुरुषोत्तमोऽसीत्यादौ पुंस्त्वैकत्वविशिष्टदेवत्वावच्छेदेन सम्बोध्यत्वमेकवचनप्र-

थमया प्रत्याय्यते। त्वंशब्देनापि पुंस्त्वैकत्वविशिष्टदेवत्वविशिष्ट उच्यते। अत एव सर्वलिङ्गेऽपि युष्मदस्मदोः समानरूपता। इत्थं च हे ब्राह्मणास्त्वं प्रसीदेति न प्रयोगः सम्बोध्यतावच्छेदकतयोपलक्षितेन बहुत्वविशिष्टब्राह्मणत्वेन विशिष्टस्य युष्मदा परामर्शे तत्रैकवचनस्यानन्वितार्थकत्वादसाधुत्वाच्च।

हे चण्ड हे मुण्ड बलैर्बहुभिः परिवारितौ।
तत्र गच्छत गत्वा च सा समानीयतां लघु॥

इत्यादावेकत्वविशिष्टचण्डत्वैकत्वविशिष्टमुण्डत्वस्वरूपधर्मद्वयावच्छेदेन प्रथमया संबोध्यत्वबोधनेऽपि तादृशचण्डत्वविशिष्टस्य तादृशमुण्डत्वविशिष्टस्य च युष्मदा परामर्शात्ततो न द्विवचनमनुपपन्नम्। एकघटैकपटाविव्यादिद्वन्द्वस्थले इव द्वित्वान्वयसम्भवात्।

हे सौमित्रे सखा यस्ते निर्विशेषस्त्वया गुहः।
युवां गत्वा नदीमेनां शीघ्रमानयतं पयः॥

इत्यादौ यच्छब्दाकाङ्क्षापूरणक्रमेण तच्छब्देन युष्मद एकशेषे स्मृततच्छब्देन शक्त्या युष्मदा लक्षणया वोपस्थापितं गुहमादाय द्वित्वान्वयसम्भवात् युष्मदुत्तरं द्विवचनोपपत्तिरिति रीतिरियं भवच्छब्देऽपि बोध्या। तेन हे ब्राह्मणा भवान् प्रसीदत्वित्यादिको न प्रयोगः। यत्र अर्जुनार्जुन सात्यके सात्यके।

कृतमनुमतं दृष्टं वा यैरिदं गुरुपातकं।
मनुजपशुभिर्निर्मर्यादैर्भवद्भिरुदायुधैः॥
नरकरिपुणा सार्धं तेषां सभीमकिरीटिना-।
मयमहमसृङ्मेदोमांसैः करोमि दिशां बलिम्॥

इत्यादौ सम्बोध्यत्वे द्वित्वे भवच्छब्दो बहुवचनान्तस्तत्र न सम्बोध्यार्थको भवच्छब्दः किं तु शत्रन्तः तेन मनुजपशुभवनविशिष्टैरिति यैरित्यस्य विशेषणम् । यत्तु नाथ पालयेत्यादौ पालनकर्तृत्वस्य सम्बोधनप्रथमान्तार्थ एवान्वय इति । तदसत् । गुणीभूते प्रथमान्तार्थे आख्यातार्थान्वयायोगात् । सम्बोधनप्रथमान्तार्थस्य सम्बोध्यत्वे गुणीभूतत्वात् । अन्यथा नारायण इव नरो गच्छतीत्यादौ नारायणेऽपि गमनकर्तृत्वान्वयप्रसङ्गात् । किं च युष्मदोऽसामानाधिकरण्ये मध्यमपुरुषो न स्यात् । न च युष्मत्पर्यायो यः सम्बोधनप्रथमान्त इति मध्यमपुरुषोपपत्तिरिति वाच्यम् । तथा सति भवच्छब्दसामानाधिकरण्येऽपि मध्यमपुरुषप्रसङ्गात् । नन्वेवम् ।

अकाण्डशक्तिनिर्भिन्ने वत्से जहति चेतनां ॥
हताश राम कस्यार्थे दग्धं जीवितमिच्छसि ।

इत्यादौ रामस्य वक्तुः सम्बोध्यत्वमनुपपन्नम् । तदा हि तस्य वाक्यार्थज्ञानासत्त्वे वाक्यप्रयोगोऽनुपपन्नः । वाक्यार्थज्ञानस्य सत्त्वे तु तस्य सिद्धतया तदिच्छाविरहवाक्यार्थसिद्धौ शाब्दबोधो न भवतीति चेन्न । मानान्तरजन्यवाक्यार्थज्ञानसत्त्वेऽपि वाक्यार्थगोचरशाब्दत्वावच्छेदेनेच्छासम्भवात् । श्रवणसिद्धौ मननेच्छावत् सिद्धेः शाब्दं प्रत्यप्रतिबन्धकत्वात् । प्रतिबन्धकत्वे वा शाब्देच्छाविरहविशिष्टायास्तस्यास्तथात्वाच्चेति वक्तुरपि स्ववाक्यजन्याभीष्टवाक्यार्थबुद्धिसमवायितया सम्बोध्यत्वमबाधितमिति संप्रदायः । ननु सम्बोध्यपुरुषवृत्तिवाक्यार्थज्ञानस्य सिद्धत्वनिश्चये करणापाटवेन प्रयुक्तस्य चैत्र त्वं गच्छेति वा-

क्यस्य प्रामाण्यापत्तिः। भाविभूताया: पुरुषान्तरीयाया-
इच्छाया विषयत्वस्य चैत्रीयवाक्यार्थज्ञानेऽबाधितत्वात्।
एवं सम्बोध्यपुरुषप्रवृत्तिवाक्यार्थज्ञानस्य वाक्याजन्यत्वेऽपि
अगृहीतपदसङ्केतं म्लेच्छमुद्दिश्याचार्यैः प्रयुज्यमानस्य
शृङ्गापरेत्यादिवाक्यस्य प्रामाण्यसम्भवात् उपहास्यत्वा-
भावप्रसङ्गश्च म्लेच्छे मानान्तरजन्यवाक्यार्थज्ञानस्य म्ले-
च्छवाक्यार्थज्ञाने चार्येच्छाविषयत्वस्याबाधितत्वात् म्ले-
च्छस्य सम्बोध्यत्वोपपत्तौ दर्शितवाक्यप्रामाण्यस्य निष्प्रत्यू-
हत्वात्। तत्तत्कालीनत्वेन तत्तत्पुरुषीयत्वेन चेच्छायां
तत्तद्वाक्यजन्यत्वेन ज्ञानस्य च सम्बोधनप्रथमार्थत्वे शक्त्या-
नन्त्यमिति चेन्न। यतः स्वघटितवाक्यप्रयोगोपधायक-
त्वोपलक्षितेच्छायां स्वघटितवाक्यजन्यत्वोपलक्षिते ज्ञाने
च सम्बोधनप्रथमायाः शक्तिः। यथा तदादिपदानां स्व-
प्रयोगोपधायकबुद्धिप्रकारत्वोपलक्षितधर्मविशिष्टे शक्तिः
शक्तिग्रहस्तु सामान्योपलक्षितविशेषावगाही सर्वोपसं-
हारेण। तथा हि। तत्पदत्वावान्तरतत्ताल्वोपलक्षिता-
स्तत्तत्पदत्वव्यक्तीर्धर्मितावच्छेदकीकृत्य तत्पदप्रयोगोपधा-
यकबुद्धिप्रकारत्वावान्तरतत्त्वोपलक्षितधर्मविशिष्टबोध-
कत्वावगाही वृत्तिग्रहः। फलतस्तत्पदत्वावच्छेदेन तत्त-
द्धर्मविशिष्टवाचकतामेवावगाहते। तथा सम्बुद्धिप्रथमाया
अपि प्रथमात्वावान्तरतत्तात्वोपलक्षिततत्तत्प्रथमात्वाव-
च्छेदेन सम्बोधनप्रथमाप्रयोगोपधायकत्वावान्तरतत्तात्वो-
पलक्षितधर्मविशिष्टेच्छावाचकत्वं गृह्यते। इच्छायां ता-
दृशोपलक्षितधर्मस्तद्व्यक्तित्वमेव। न च तद्व्यक्तित्वेनेच्छाऽ-
वगमे वाचकतायामिच्छाप्रवेशो व्यर्थ इति वाच्यम्। इ-

च्छाहृत्तितद्यक्तित्वलाभार्थमिच्छाप्रवेशात्। अथ वैच्छावृत्तित्वोपलक्षितत्वेनापि धर्मो विवक्षणीय इच्छा वाचकतायां न प्रवेशनीयेति। एवं स्वघटितवाक्यजन्यत्वेनोपलक्षितं ज्ञानमपि दर्शितरीत्या सम्बुद्धिप्रथमावाच्यमिति यथा तदादिपदानां न शक्त्यानन्त्यं तथा सम्बोधनप्रथमाया अपीति पदवाक्यरत्नाकरे गुरुचरणाः। अत्रेदं तत्त्वम्। ज्ञानेच्छा सम्बोधनप्रथमार्थः सा चेच्छा चैत्रस्य मैत्रीयगमनकर्तृत्वज्ञानं भवत्वित्यादिविशेषाकारा सर्वत्र सम्बोधनस्थले। एवं चैत्र मैत्रो गच्छतीत्यादौ चैत्रश्चैत्रप्रातिपदिकान्मैत्रीयगमनकर्तृत्वं मैत्रो गच्छतीति वाक्यात्प्रतीयते ऽनन्यलभ्यतया ज्ञानेच्छा सम्बोधनप्रथमार्थः। तत्रेच्छायां चैत्रादिप्रातिपदिकार्थस्य समवेतत्वसंसर्गावच्छिन्नस्य प्रकारतानिरूपितज्ञानत्वावच्छिन्नविशेष्यतावच्छिन्नोद्देश्यताप्रतियोगित्वेन सम्बन्धेनान्वयः इच्छा तु स्वोद्देश्यत्वावच्छिन्नज्ञानत्वावच्छिन्नविशेष्यतानिरूपितविषयितासंसर्गावच्छिन्नप्रकारतासंबन्धेन वाक्यार्थे मैत्रीयगमनकर्तृत्वादावन्वेति। एवं चैत्र मैत्रो गच्छतीत्यादौ चैत्रस्य व्यासङ्गवशाद्वाक्यार्थज्ञानानुत्पादेऽपि न सम्बोध्यत्वहानिः दर्शितसंसर्गेण चैत्रस्येच्छायामिच्छायाश्च वाक्यार्थेऽन्वयस्य निष्प्रत्यूहत्वात्। उद्देश्यता तु वाक्यप्रयोगप्रयोजकतत्तदिच्छीयोद्देश्यतात्वेन संसर्गमध्ये निविशते। एवमेवाशीर्लिङ्लोटोरर्थस्येच्छाया अप्युद्देश्यताप्रयोक्तृतत्तदिच्छीयोद्देश्यतात्वेन संसर्गमध्ये निविशते। भवतु वा स्वप्रयोक्तृतावच्छेदकत्वोपलक्षितधर्मविशिष्टे प्रयोक्तरि सम्बोधनप्रथमायाः आशीर्लिङ्लोटोश्च शक्तिस्तत्र

देवदत्तादेः प्रयोक्तुस्तत्तत्कालावच्छिन्नसमवेतत्वेन संबन्धेनेच्छायामन्वयः। तेन चैत्रस्य कालान्तरे देवदत्तसम्बोध्यस्य मैत्रीयगमनकर्तृत्वादिस्वरूपवाक्यार्थज्ञाने सिद्धत्वनिश्चयदशायां पुरुषान्तरस्य तादृशचैत्रीयवाक्यार्थज्ञानेच्छायां यज्ञदत्तं सम्बोधयता देवदत्तेन करणापाटवेन प्रयुक्ते चैत्र मैत्रो गच्छतीत्यादौ चैत्रस्य सम्बोध्यत्वविरहादप्रामाण्यं कालान्तरीयपुरुषान्तरीयेच्छयोस्तद्वाक्याप्रयोजकत्वात्तयोरिच्छयोस्तदिच्छीयोद्देश्यताघटितसंबन्धमध्ये प्रवेशाभावात्। प्रयोगजनकयज्ञदत्तविषयकसम्बोधनेच्छायां तदिच्छीयोद्देश्यत्वघटितेन दर्शितसंसर्गेण चैत्रस्यान्वयासम्भवात्। प्रयोक्तुः प्रथमार्थत्वपक्षे देवदत्तसमवेततत्तत्कालिकेच्छायां दर्शितसंसर्गेण चैत्रस्यान्वयासम्भवाच्च। एवं प्रयोक्तृपुरुषेणोपलक्षिताया ज्ञानेच्छाया उद्देश्यतयाऽनुपलक्षितायास्तत्तदिच्छीयोद्देश्यतया वाऽवच्छिन्नं यज्ज्ञानत्वावच्छिन्नविशेष्यत्वं तन्निरूपितसमवेतत्वसंसर्गावच्छिन्नप्रकारतावच्छेदकत्वसंबन्धेन ज्ञानेच्छोपलक्षितधर्मविशिष्टे युष्मत्पदस्य शक्तिः त तदिच्छोद्देश्यताव्यक्तेरुद्देश्यतात्वेनैव संबन्धमध्ये प्रवेशः। यथा स्वर्गकामो यजेतेत्यादौ इष्टसाधनत्वं विध्यर्थस्तत्राव्यवहितपूर्वकालः अधिकरणं अभावः प्रतियोगितावच्छेदकत्वं धर्मश्च खण्डशो विध्यर्थस्तत्रेष्टत्वेनोपस्थितः स्वर्गोऽव्यवहितपूर्वकाले सोऽधिकरणे तदभावे सप्रतियोगितायां सावच्छेदकत्वे तदभावे सधर्मोऽन्वेति तत्र स्वर्गाव्यवहितपूर्वकालस्याननुगमेऽपि तत्तत्क्षणावच्छिन्नाधिकरणतयाऽभावस्य स्वर्गादिकार्याधिकरणेऽन्वयस्तेन तत्तत्क्षणाव-

च्छेदेन स्वर्गाधिकरणावृत्तिर्योऽभावस्तत्प्रतियोगितावच्छे-
दकत्त्वाभाववान् धर्म इति लिङर्थबोधस्तत्र यथा न श-
क्त्यानन्त्यं तथात्रापि यदि चाव्यवहितपूर्वकालो लि-
ङर्थे न निविशते किं त्वधिकरणमभावः प्रतियोगितावच्छेदकत्वं धर्मश्चेति पञ्च लिङर्थाः तत्र स्वर्गोऽधिकरणेऽधिकरणं तत्तत्स्वर्गाव्यवहितपूर्वक्षणावच्छिन्नाधेयतासंबन्धेनाभावे प्रतियोगितायां सावच्छेदकत्वे तदभावे सधर्मेऽन्वेति। एवं यागत्वावच्छेदेन स्वर्गाधिकरणनिष्ठाभावप्रतियोगितावच्छेदकत्वाभाववद्धर्मवत्ताज्ञानमेव यागप्रवृत्तौ हेतुः सधर्मस्तु यागत्वमेव दर्शितधर्मत्वेन रूपेण यागत्वावच्छेदेन गृह्यते। एवमेवान्यत्रापीष्टसाधनताज्ञानस्य प्रवर्तकत्वं संसर्गघटितविशेषं सामान्येनावगाहमानमिष्टसाधनताज्ञानं सामान्येन व्यभिचारग्रहः प्रतिरोद्धुं नेष्टेऽतः स्वर्गत्वावच्छेदेन सामान्यतो व्यभिचारग्रहेऽपि न क्षतिः। न चैवं व्यभिचारग्रहेऽपि दण्डविशेषत्वादिना घटकारणताग्रहः स्यात् घटत्वावच्छेदेन सामान्यतो व्यभिचारग्रहस्य सामान्यविशेषावगाहिकारणताग्रहं प्रत्यविरोधित्वादिति वाच्यम्। सामान्यतो व्यभिचारग्रहस्य सामान्यतः कारणताया ग्रहविरोधित्वे निष्प्रत्यूहत्वात्। प्रकृतेऽपि स्वर्गत्वावच्छेदेन सामान्यतो न यागकारणताग्रहः दण्डविशेषत्वादिना सामान्यतो विशेषावगाही कारणताग्रहस्तु न सम्भवति। घटत्वावच्छिन्नं प्रति दण्डत्वादिना सामान्यतः कारणत्वस्यावश्यकत्वे विशेषघटितकारणताया एवाप्रसिद्धेः। प्रकृते तु स्वर्गत्वावान्तरवैजात्यावच्छिन्नं प्रति यागत्वेन कारणतायाः

सत्वात् सामान्येन तदवगाही कारणताग्रहः सम्भवत्येवेति लिङो न शक्त्यानन्त्यम्। युष्मच्छब्दस्य तु तत्तदिच्छीयोद्देश्यतायाः संसर्गविधयाऽपि सङ्केतप्रवेशे कुतो न शक्त्यानन्त्यमिति विभाव्यते तदा युष्मच्छब्दस्य स्वप्रयोगोपधायकेच्छीयोद्देश्यत्वावच्छिन्नविशेष्यतानिरूपितसमवेतत्वसंसर्गावच्छिन्नप्रकारताश्रयच्छेदकत्वसम्बन्धेन स्वोपलक्षितधर्मविशिष्टे शक्तिः। युष्मच्छब्दपरस्य स्वशब्दस्योभयत्र परिचायकतया कथनमिति कालान्तरीयपुरुषान्तरीयेच्छाघटितसम्बन्धेन विद्यमानस्यैतत्पुरुषप्रयुक्तस्य युष्मच्छब्दस्य स्वत्वासत्वान्नातिप्रसङ्गः। तत्तद्युष्मच्छब्दस्य तत्तत्कालीनज्ञानेच्छाविषयेऽर्थतः शक्तिपर्यवसानेऽपि न शक्त्यानन्त्यं युष्मच्छब्दस्य सामान्यरूपेणैव सङ्केतग्रहे प्रवेशात्। यदि च युष्मच्छब्दाच्चैत्रत्वादिना चैत्रादिर्न प्रतीयते तथा सति त्वं चैत्र इत्यादौ चैत्रस्त्वं इत्यादाविव निराकाङ्क्षतयाऽनन्वयः स्यादिति तदा ज्ञानेच्छाप्रकार एव युष्मच्छब्दस्य शक्तिस्तत्र ज्ञानेच्छायाः स्वप्रयोज्यवाक्यप्रयोगोपधायकेच्छीयोद्देश्यत्वावच्छिन्नज्ञानत्वावच्छिन्नविशेष्यतानिरूपितसमवेतत्वसंसर्गतानिरूपितत्वसंबन्धेन वैशिष्ट्यं प्रकारत्वे विशिष्टप्रकारत्वस्य वैशिष्ट्यं धर्मिणि स्वरूपसंबन्धेन बोध्यमिति ज्ञानेच्छाविशिष्टप्रकारत्वविशिष्टो युष्मच्छब्दार्थः। स्वप्रयोज्येत्याद्युपादानात्कालान्तरीयायाः स्वज्ञानेच्छायाः प्रकारे नातिप्रसङ्गः स्वशब्दस्य ज्ञानेच्छापरिचायकत्वान्न शक्त्यानन्त्यमिति। एवं ज्ञानेच्छायाः स्वप्रयोज्यवाक्यप्रयोगोपधायकेच्छीयसमवायेन वैशिष्ट्य-

वानस्मच्छब्दार्थ इति। एवं चैव त्वं पश्येत्यादौ चैत्रप्रकारकज्ञानेच्छाप्रकारः आशंसाविषयदर्शनकर्ता ज्ञानेच्छाप्रकार इतिशाब्दबोधस्य विशेषणविशिष्टयोरुद्देश्यतावच्छेदकविधेययोर्विशेषणाभेदाद्भेदेनोपपत्तिः कनककुण्डलवान् मणिकुण्डलवानितिवत् एवं म्लेच्छमुद्दिश्याचार्यैः प्रयुज्यमानस्य युष्मापसरेत्यादिवाक्यस्य म्लेच्छे सम्बोध्यत्वस्य युष्मदर्थत्वयोर्निराबाधतया शक्तिभ्रमाजन्यत्वसम्भवेऽप्यगृहीतसङ्केतकोद्देश्यकतयोपहास्यत्वं सम्भवत्येव शक्तिभ्रमजन्यत्वस्योपहास्यत्वाप्रयोजकत्वात् तथासत्यपभ्रंशेऽप्युपहास्यत्वापत्तेः। इच्छाविषयज्ञानस्य सम्बोधनार्थत्वे तत्समवायितावच्छेदकत्वोपलक्षितधर्मस्य वा युष्मत्पदप्रवृत्तिनिमित्तत्वेऽभ्युपेतेऽपि शक्तिभ्रमजन्यत्वं नोपहासप्रयोजकमन्यथा भगवज्ज्ञानस्य सिद्धतया तत्रेच्छाविरहात् भगवत्सम्बोधकस्य भगवत्परयुष्मच्छब्दघटितस्य

स्वकर्मफलनिर्दिष्टां यां यां योनिं व्रजाम्यहं।
तस्यां तस्यां हृषीकेश त्वयि भक्तिर्दृढाऽस्तु मे॥

इत्यादिवाक्यस्य शक्तिभ्रमजन्यतयोपहास्यत्वापत्तेः। अगृहीतपदसंकेतकोद्देश्यकवाक्यत्वस्योपहासप्रयोजकत्वे भगवतो गृहीतपदसंकेतकत्वात्। तदुद्देश्यकवाक्यस्य नोपहास्यत्वमिति ज्ञानेच्छायाः सम्बोधनप्रथमार्थत्वे भगवतः संबोध्यत्वं निराबाधमेव। भगवत्प्रत्यक्षस्य सिद्धत्वेऽपि भगवतः शाब्दज्ञानं जायतामितीच्छायाः सम्भवात्। न च भगवतः शाब्दबोधे कथं तादृशीच्छा सम्भवेदिति वाच्यम्। बाधितविषयेऽपीच्छासम्भवात्।

नवपल्लवसंस्तरेऽपि ते मृदु दूयेत यदङ्गमर्पितं ।
तदिदं विषहिष्यते कथं वद वामोरु चिताधिरोहणम् ॥

इत्यादौ मृतेन्दुमतीवचनशुश्रूषादेर्दर्शनात् । स्वकर्मफलेत्याद्युक्तवाक्ये ।

त्रिस्वरूपकृतविश्व कियत्ते वैभवाद्भुतमणौ हृदि कुर्वे ।
हेम न क्षति कियन्निजचौरे काञ्चनाद्रिमधिगत्य दरिद्रः ॥

इत्यादौ भगवतः संबोध्यत्वं निष्प्रत्यूहमेव । एवं "जानीहि नाथ दीनोऽस्मी"त्यादौ दीनाभिन्नमत्कर्तृकभवनविषयके आशंसाविषयत्वकर्तृकज्ञाने अथ वा भवनकर्तृत्वान्वितदीनाभिन्नमद्विषयकस्याशंसाविषयज्ञानस्य कर्तृत्वान्विते त्वंपदार्थे नाथप्रकारकज्ञानेच्छाप्रकारत्वस्य संबुद्धिप्रथमान्तार्थस्यान्वयः नाथस्य मदीयदीनभावविषयज्ञानविषयकं ज्ञानं जायतामितीच्छासम्भवात् । इच्छाविषयत्वस्य ज्ञानविषयकज्ञानवृत्तित्वपर्यन्तधावनं मदीयदीनभावज्ञानस्यापीच्छात्मकत्वार्थमुपेक्षाज्ञानस्यानुव्यवसायविषयत्वानियमादिति । यत्र संबोधनपदघटितवाक्यं "नारायण नमोऽस्तु ते"इत्यादिस्वरूपं मुक्तः श्रूयते तत्र ज्ञानान्तरेच्छया संबोध्यत्वनिर्वाहः । एवं "मकाण्डशक्तिनिर्भिन्न"इत्यादिवाक्ये ज्ञानान्तरेच्छया वक्तुरपि संबोध्यत्वनिर्वाहः । एवं

शोचनीयाऽसि वसुधे या त्वं दशरथच्युता ।
रामहस्तमनुप्राप्य कष्टात्कष्टतरं गता ।

इत्यादावचेतनस्य वसुधादेर्बाधितविषयेपीच्छासम्भवेन ज्ञानेच्छाप्रकारतया संबोध्यत्वयुष्मत्पदप्रतिपाद्यत्वयोर्निर्वाहेऽपि कष्टतरगततादात्म्यान्वयबाधादसुधावा-

सिलोके लक्षणा तत्प्रयोजनं तु रामवरागत्वरूपवसुधाधर्मस्य लोके प्रतिपत्तिरिति। एवं सति गृहीतपदसङ्केतकोद्देश्यकतया नास्य वाक्यास्योपहास्यत्वमिति दार्शनिकसिद्धान्तः। चेतनतादात्म्यारोपेण वसुधायाः संबोध्यत्वं युष्मत्प्रतिपाद्यत्वं कष्टतरगततादात्म्यान्वयश्च सम्भवतीति। अत एव तुल्ये प्रस्तुते तुल्यस्याभिधानमित्यप्रस्तुतप्रशंसालंकार ईदृशस्थले स्फुरति पुत्रशोकसन्तप्तस्य वक्तुर्ब्राह्मणस्य प्रस्तुतस्य तादात्म्यारोपेण युष्मत्प्रतिपाद्यत्वसंबोध्यत्वयोर्वसुधायामुपपत्तौ युष्मदर्थे सम्बोधनान्तार्थे वसुधातादात्म्येनाध्यवसितः प्रस्तुतोऽर्थोऽन्वेति व्यञ्जनयोपस्थितइति रसविद्याविदः। युष्मदेकवचनादिव्यवस्था पूर्वोक्ताऽनुसन्धेया। श्रीरक्षाहीत्यादौ सम्बोधनैकवचनस्य सः प्रथमागत्वात् स्त्वेनैव वाचकत्वं हरे विष्णो रामेत्यादौ लोपः स स्मारक इति। तदिदं सम्बोध्यत्वं क्रियायां विशेषणम् "एकतिङ्वाक्यमि"ति कात्यायनवाक्यात्। तत्र भाष्यकारेण ब्रूहि देवदत्तेति वाक्यमुक्तम्। तस्यायमभिसन्धिः। "आमन्त्रितस्य चे"ति सूत्रेणामन्त्रणार्थकप्रत्ययान्तपदानां पदात्पराणामेव निघाता नाम सर्वानुदात्तः स्वरो विधीयते स च देवदत्तपदे तदा स्यात् यदि देवदत्तपदब्रूहिपदयोर्व्यपेक्षा स्यात्। पदयोर्व्यपेक्षारूपसामर्थ्यविरहे समर्थः पदविधिरिति व्यवस्थापनात् पदसम्बन्धिनो निघातविधेरप्रवृत्तेः देवदत्तपदे निघातो न स्यात्। तथा च वार्तिकं। "समानवाक्ये निघातयुष्मदस्मदादेशा" इति समानवाक्यं समर्थवाक्यमेव ब्रूहि पददेवदत्तपदयोर्व्यपेक्षा

तदैव भवति यदि देवदत्तसम्बोध्यत्वं वचनक्रियायामन्वेति। न च ब्रूहीत्यत्र तिङर्थकर्तरि सम्बोधनप्रथमान्तार्थस्य देवदत्तस्य तादात्म्येन सम्बोधनार्थस्य वा समवायेनान्वयोऽस्तु तावताऽप्येकवाक्यत्वरूपसामर्थ्यमुपपद्यत इति वाच्यम्। मध्यमपुरुषार्थे कर्तरि युष्मदर्थातिरिक्तस्य तादात्म्येनान्वयायोगात्। व्रजानि देवदत्तेत्यत्र तिङर्थकर्तरि सम्बोधनप्रथमान्तार्थस्य तादात्म्येन संबोधनार्थस्य च समवायेनाऽयोग्यतयान्वयासम्भवाच्च। तथाचोक्तं हरिणा।

सम्बोधनपदं यच्च तत् क्रियाया विशेषणं।
व्रजानि देवदत्तेति निघातोऽत्र तथा सति॥

तस्मात्प्रातिपदिकविशेषितं सम्बोध्यत्वं क्रियायां विशेषणं तिङन्तविनाकृतं वाक्यमेव नास्तीति कात्यायनानुसारिणो वैयाकरणाः। फणिभाष्यकृतस्तु एकतिङ्वाक्यमिति नानुमन्यन्ते। पश्य मृगो धावति, जानीहि जगज्जगन्नाथाज्जायते, अस्ति साधवः सीदन्ति, भवति दुर्जना मोदन्ते, इत्याद्यनेकतिङन्तमप्येकं वाक्यं मन्यन्ते तत्र मृगकर्तृकधावनस्य धावनकर्तृमृगस्य वा कर्मतया दर्शने, जगत्कर्तृकनाथहेतुकजननस्य नाथहेतुकजननकर्तृजगतो वा कर्मतया ज्ञाने, साधुकर्तृकसीदनस्य सीदनकर्तृसाधोर्वा कर्तृतया सत्तायां, दुर्जनकर्तृकमोदस्य मोदकर्तृदुर्जनस्य वा कर्तृतया संसर्गेण भवने, यथादर्शनमन्वयोपगमादेवाक्यतानिर्वाहः। तथोक्तं च।

सुबन्तं हि यथाऽनेकं सुबन्तस्य विशेषणं।
तथा तिङन्तमप्याहुस्तिङन्तस्य विशेषणम्॥

अत एव "तिङ्ङतिङः" इति सूत्रमतिङन्तात्परं तिङन्तं निहन्यत इत्यर्थकम् अग्निं दूतं वृणीमहे इत्यादौ तिङन्ते वृणीमहे शब्दे निघातस्वरं विदधाति तत्र सूत्रे पचति भवतीत्यादौ भवतीत्यादितिङन्ते निघातवारणायातिङ इति पदं सार्थकम् । अन्यथा तिङन्तयोरेकवाक्यताविरहे सामर्थ्याश्रितनिघातविधेस्तिङन्तपरे तिङन्ते प्रसक्तिर्न भवतीति व्यर्थमेवातिङ्पदं स्यात् । न चैकतिङ्वाक्यमित्यनेन नानेकतिङन्तवाक्यस्य निषेधः किं तु वाक्यं सतिङन्तमेवेति नियम इति वाच्यम् ।

कष्टा वैधव्यथा कष्टं नित्यमुद्वहनक्रमः ।
श्रवणानामलङ्कारः कपोलस्य तु भूषणम् ॥

इत्यादेस्तिङन्तशून्यवाक्यस्य दर्शनात् । न चास्तिभवन्तिपरः प्रथमपुरुषो ऽप्रयुज्यमानोऽप्यस्तीति कात्यायनवचनात् तिङन्तशून्यवाक्येऽस्तीत्यध्याहार इति वाच्यम् । अध्याहारे मानाभावात् । तिङन्तविनाकृतं वाक्य न्नानुभावकमिति व्युत्पत्तिरपि न सम्भवति । तथा हि । प्रथमान्ततिङन्तघटितवाक्यस्थले प्रथमान्तार्थस्य तिङन्तेऽन्वयोऽभ्युपेयते भूतले न घट इत्यादावस्तीत्यध्याहारे तिङर्थे नञर्थविशेषणघटस्यान्वयासम्भवात् न च भूतलवृत्तित्वाभावो घटेऽन्वेतीति वाच्यम् । कारकस्य कारकान्वितनञर्थस्य वा क्रियातिरिक्तेऽन्वयस्याव्युत्पन्नत्वात् न च भूतलाधेयत्वाभावोऽस्ती यत्र धात्वर्थ एवान्वेति धात्वर्थविशेषणे तिङर्थकर्तरि घटस्य तादात्म्येनान्वय इति वाच्यम् । घटपदस्यातीतघटपरतायां घटस्य तिङर्थकर्तरि योग्यताविरहात् तादात्म्येनान्वयासम्भवा-

त्। न च भूतलाधेयत्वमध्याहृतास्तिधात्वर्थे सत्तायामन्वेति तद्विशेषणे तिङर्थकर्तरि घटविशेषितो नञर्थभेदोऽन्वेतीति वाच्यम्। तथा सति घटवत्यपि भूतले घटान्योऽस्तीतिवत् घटो नास्तीतिप्रयोगापत्तेः। न च भूतलाधेयत्वान्वितेनाध्याहृतास्तिधात्वर्थेन सत्तया विशेषितस्य तिङर्थकर्तुर्नञर्थभेदेऽन्वयस्तथान्वितो भेदो घटेऽन्वेतीति वाच्यम्। तथा सति क्रियायाः प्राधान्यनियमभङ्गापत्तेः। एवं सति शाब्दस्य क्रियामुख्यविशेष्यकत्वनियमरक्षार्थमस्तीत्यध्याहारो व्यर्थ एव तादृशनियमभङ्गस्य स्वयमेव स्वहस्तितत्वादिति। अत एव भूतले न घट इत्यादौ प्रतियोगितासंबन्धेन प्रातिपदिकार्थविशेषितस्य स्वार्थात्यन्ताभावस्यान्वयबोधने नञनुयोगिवाचकपदे समभ्यपेक्ष्यते नापेक्ष्यते विभक्त्यर्थविशेषितस्येति सर्वतान्त्रिकसिद्धा व्यवस्थितिरिति। एवं सुबन्तसमुदायस्तिङन्तसमुदायः सुबन्ततिङन्तोभयसमुदायश्च विविधं वाक्यं तत्र प्रधानार्थे सम्बोध्यत्वान्वय इति महाभाष्यानुसारिणः। एवं चैत्रः पचतीत्यादौ धात्वर्थः प्रधानमिति शाब्दिकाः। तिङर्थो भावना प्रधानमिति भाट्टाः। प्रथमान्तार्थः प्रधानमिति तार्किकाः। तदनुसारिणोऽन्येऽपि दार्शनिकाः। तेषां तेषां तत्र तत्र प्रधानेऽर्थे सम्बोध्यत्वान्वय इति। अत एव देवदत्त यज्ञदत्तः समागत इत्यादौ समागताभिन्नयज्ञदत्ते देवदत्तसम्बोध्यत्वान्वयः। एवं सम्बोधनान्तपदं तिङन्तमात्रसाकाङ्क्षमिति भ्रमः। एवं प्रथमार्थः सम्बोध्यत्वं लिङ्गं सङ्ख्या च नञर्थेऽभावे नान्वेति। तेन यज्ञदत्तः समागतो

देवदत्तेनेत्यादौ समागतयज्ञदत्ते देवदत्तसम्बोध्यत्वाभावस्य न प्रतीतिः न वा घटो नेत्यादौ लिङ्गसङ्ख्याभावप्रतीतिरिति ।

---

इति विभक्त्यर्थनिर्णये सम्बोधनप्रथमार्थनिर्णयः ।

इति प्रथमाविवरणं समाप्तम् ।



# अथ द्वितीया।

अम् औट् शसिति त्रयः प्रत्ययाः। तत्र सुमनसमर्चयति सुमनसौ सुमनसो वेत्यादौ श्रूयमाणत्वादसमस्तत्वेन औकारस्य औत्वेन असः अस्त्वेन वाचकत्वं टशावनुबन्धौ क्वचिदप्यश्रूयमाणत्वान्न वाचकताकुक्षिप्रविष्टाविति। अनुशासनसिद्धस्तु द्वितीयाया अर्थः अनुशासनं च "कर्मणि द्वितीये"ति तत्र कर्म कर्मत्वं वा द्वितीयार्थं इत्यादिकमग्रे स्फुटीभविष्यति कर्मपदसङ्केतग्राहकं पूर्वोक्तमनुशासनम्। "कर्तुरीप्सिततमं कर्मे"ति तत्राप्नोतेः सन्नन्ततया निष्पन्नोऽपीप्साशब्दो रूढ्या इच्छामात्रमभिधत्ते। न त्वाप्नीच्छामिति सन्नन्तस्याप्नोतेरिच्छैवार्थः। एवं वीप्साशब्दो रूढ्या व्याप्तिमभिधत्ते न तु व्याप्तीच्छामिति सन्नन्तस्य व्याप्नोतेर्व्याप्तिरेवार्थः। एवं सन्नन्ताप्नोतेः कर्मप्रत्ययेन क्तेन विषयो विषयताऽऽश्रयो वाऽभिधीयते। एवं "क्तस्य च वर्तमाने" इति विशेषानुशासनेन निष्ठायोगे सिद्धा षष्ठी कर्तृत्वमाधेयत्वस्वरूपमभिधत्ते। तमप्प्रत्ययस्तु प्रकृत्यर्थतावच्छेदकान्वितमतिशयं प्रकर्षमभिधत्ते। कर्मपदवाच्यं कर्मशब्दार्थः। धात्वर्थस्य तिङर्थस्य वा व्यापारस्याश्रयः कर्तृशब्दार्थः। एवं व्यापाराश्रयनिष्ठेच्छाप्रकृष्टविषयः कर्मपदवाच्य इति सूत्रार्थः। इच्छा तु व्यापारजनिका बोध्या ग्रामसंयोगो भवत्वितीच्छायां ग्रामसंयोगसाधनं स्पन्द इति ज्ञानात्प्रवृत्त्यागमनोत्पत्त्यागमनप्रयोजकेच्छाविषयत्वं ग्रामे कर्मत्वं व्यापारप्रयोजकत्वस्येच्छायां लाभार्थं कर्तुरिति पदं तेन

माषेष्वश्वं बध्नातीत्यादावश्वभोजनेच्छाविषयत्वेऽपि माषस्य न कर्मत्वं तुरगभोजनेच्छाया बन्धनाप्रयोजकत्वात्। तमपग्रहणं प्राधान्येन विषयत्वलाभार्थम्। तच्च क्रियाजन्यफले साक्षाद्विशेषणत्वं तेन भोजनव्यापारस्य पयस्सम्बन्धितौदनकण्ठसंयोगो भवत्वितीच्छाप्रयोज्यत्वेऽपि पयसो न कर्मत्वं पयसः कण्ठसंयोगे फले साक्षाद्विशेषणतया इच्छाविषयत्वाभावात्। तेन पयसा सहौदनं भुङ्क्ते इत्यादौ पयःपदान्न द्वितीया। सर्वमेतद्बालोपलालनं न तु द्वितीयार्थोपवर्णनम्। द्वितीयातो दर्शितेच्छाविषयत्वस्य केनाप्यप्रतीयमानत्वात्। एवं"कारके"इत्यधिकारः। कारकशब्दार्थः पूर्वमुक्तः। सप्तमी निर्धारणार्थी। तेन ईप्सितादिभिन्नं कारकं न कर्मेप्सितादिकारकं कर्मेत्यन्वयबोधस्तेन कर्मशब्दसङ्केतोऽत्र कारके प्रदर्शितो न तु सर्वत्र। तेन कर्मपदार्थस्योत्क्षेपणादेरप्रदर्शनेन न न्यूनत्वमिति। एवं कारके इति सप्तमी प्रथमास्थाने इति भ्रमः। एवं कर्मणि द्वितीयेत्यादौ अनभिहिते इत्यधिकारसूत्रेणाभिहिते कर्मणि द्वितीया निषिध्यते। अभिधानं तिङ्कृत्तद्धितसमासैरन्येनापि अतः पच्यते पक्वो वा तण्डुल इत्यादौ तिङा कृता कर्माभिधानात् तण्डुलपदान्न द्वितीया। नैयायिकः पण्डितः शत्योऽश्व इत्यादौ तद्धितेन कर्माभिधानात् न्यायपदादश्वपदाद्वा न द्वितीया प्राप्तानन्दः पुरुष इत्यादौ समासेन कर्माभिधानात्पुरुषपदान्न द्वितीया समासस्याभिधायकत्वं शाब्दिकमते न्यायमते त्वानन्दकर्तृकप्राप्तिकर्मण्यानन्दपदस्य लक्षणा प्राप्तशब्दस्य तात्पर्यग्राहकत्वमिति आनन्दपदेनैव कर्मप्र-

ति गादनात्पुरुषपदान्न द्वितीया एवं विषवृक्षोऽपि संवर्ध्य स्वयं छेत्तुमसांप्रतमित्यादौ निपातेन कर्माभिधानाद्वृक्षपदान्न द्वितीया। उक्तार्थानामप्रयोग इति न्यायमेवानुवदतीदं सूत्रम्। अत एव धात्वर्थान्तर्भूतकर्मकधातुयोगे न द्वितीया। यथा उदयगिरिसंयोगानुकूलव्यापारवाचिन उदयतेर्योगे उदयगिरिमुदेतीति न द्वितीयाप्रयोगः। एवमनभिहिते इति कर्त्रादौ सर्वत्र सम्बध्यते तेनाभिहिते कर्तरि करणे च न तृतीया। संप्रदाने न चतुर्थी तथाऽपादाने न पञ्चमी तथाऽधिकरणे न सप्तमी कर्त्राद्यभिधानं तु कारकलक्षणे दर्शितमिति। नन्वभिहिते कर्मणि द्वितीयानिषेधे पक्वमोदनं भुङ्क्ते इत्यादौ कृता कर्माभिधानादोदनपदाद् द्वितीया न स्यात्। न च भोजनकर्मणोऽनभिधानाद् द्वितीयोपपत्तिरिति वाच्यम्। एवमपि चैत्रेण गम्यमानं ग्रामं मैत्रो गच्छतीत्यादौ गमिकर्मणः कृताभिधानात् द्वितीयाऽनुपपत्तेः। न च चैत्रकर्तृकगमनकर्मणोऽभिधानेऽपि मैत्रकर्तृकगमनकर्मणोऽनभिधानात् न द्वितीयाऽनुपपत्तिरिति वाच्यम्। एवमपि दृष्टमपि कान्तं मुहुः पश्यतीत्यादौ कर्तृभेदेनापि क्रियाभेदविरहात दृशिक्रियाकर्मणः कृताभिधानात् द्वितीयाऽनुपपत्तेः। एवं दृश्यं पश्यति कृत्यं करोति इत्यादौ यत्प्रत्ययेन कर्मणाऽभिधानात् द्वितीयाऽनुपपत्तेश्चेति चेन्न। यतो "ऽनभिहिते" इति सूत्रस्यान्य एव तात्पर्यार्थः। तथा हि। अनभिहिते इति सति सप्तमी तेन कर्मण्यनभिहिते सति द्वितीया भवतीत्यर्थः अत एवाभिधानाभावः कर्मनिष्ठो द्वितीयावाच्यतायां न निवि-

शते। एवं द्वितीयार्थविशेषणकान्वययोग्यार्थकपदे कर्मबोधकशब्दासमभिव्याहृते सति द्वितीया भवतीत्यर्थः। दृश्यं पश्यति कृत्यं करोतीत्यादौ पश्यति करोतीतिपदयोः कर्मबोधकपदासमभिव्याहृतत्वात्तदर्थयोर्द्वितीयार्थान्वययोग्यत्वाच्च दृश्यकृत्यशब्दाभ्यां न द्वितीयाऽनुपपत्तिरिति विशेषः कारकलक्षणोक्तरीत्यावसेय इति सकर्मकधात्वर्थो द्वितीयार्थान्वययोग्यः सकर्मकत्वं तु न्यायमतेऽधिकरणविशेषितफलावच्छिन्नव्यापारस्य तादृशफल व्यापारोभयस्य वा वाचकत्वमित्यादिकं सिद्धान्ते स्फुटीभविष्यति। शाब्दिकमते तच्च फलाधिकरणावाचकत्वे सति स्वार्थफलव्यधिकरणव्यापारवाचित्वम्। तेन शब्दोत्पत्तिरनुकूलव्यापारे शक्तेन शब्दायतिना शब्दस्य, स्फिग्भूसंयोगानुकूलव्यापारार्थकेनोपविशतिना स्फिग्भूद्वयस्य, अधः संयोगानुकूलव्यापारवाचिना पततिनाऽधः पदार्थस्य, सर्वावयवाधस्संयोगानुकूलव्यापारवाचिना शयतिनाऽधस्सर्वावयवद्वयस्य, उदयगिरिसंयोगानुकूलव्यापारार्थकेनोदेतिना उदयगिरेः, मिद्रामनोविभागानुकूलव्यापारार्थकेन जागर्तिना मिद्रामनोद्वयस्य, मिद्रामनः संयोगानुकूलव्यापारार्थकेन निद्रातिना मिद्रामनोद्वयस्यावयवापचयानुकूलव्यापारार्थकेन क्षीयतिनाऽवयवस्यावयवोपचयानुकूलव्यापारार्थकेन वर्धतिनाऽवयवस्य, प्राणशरीरसंयोगानुकूलव्यापारार्थकेन जीवतिना प्राणशरीरद्वयस्य, प्राणशरीरात्यन्तवियोगफलकव्यापारार्थकेन म्रियतिना प्राणशरीरद्वयस्य, च फलाधिकरणस्याभिधानात् शब्दायत्युपविशतिपततिशयत्युदेतिजागर्तिनिद्रातिक्षीयति-

वर्धतिजीवतिम्रियतीनां न सकर्मकत्वमिति तेषां वारणाय सत्यन्तम् । अनुचितकर्माऽनुत्पादफलकव्यापारो लज्जेरर्थः अनुचितकर्म यद्धेतुकं ततः पञ्चमी स्वतो लज्जते परतो लज्जत इति दर्शनात् । अनुत्पादरूपफलाधिकरणस्यानुचितकर्मणोऽभिधानादेव लज्जतिरकर्मकः । एवं स्वगतानिष्टचिन्तनं बिभेतेरर्थः । चिन्तनविषयतारूपस्य फलाधिकरणस्य चिन्तनसमानाधिकरणस्य फलस्य वाऽनिष्टस्याभिधानाद्बिभेतिरकर्मकः । आत्मधारणानुकूलव्यापारार्थकस्य भवतेरात्मधारणरूपफलसमानाधिकरणव्यापारवाचकत्वम् एवं सुखस्य फलस्य समानाधिकरणं व्यापारमभिदधतो रमतेः गतिरूपफलसमानाधिकरणनिवृत्तिमभिदधतस्तिष्ठतेश्च फलसमानाधिकरणव्यापारवाचकत्वमिति भवतिरमतितिष्ठत्यादीनां वारणाय फलव्यधिकरणत्वं व्यापारे विशेषणम् । तच्च फलाधिकरणनिष्ठान्योन्याभावप्रतियोगितावच्छेदकत्वं तेन गम्यादेः फलाधिकरणवृत्तिव्यापारवाचित्वेऽपि न सकर्मकत्वहानिः गम्यादेर्धात्वन्तरार्थफलाव्यधिकरणव्यापारार्थकत्वेऽपि सकर्मकत्वार्थं फले स्वार्थत्वं विशेषणम् । तेन स्पन्दमभिदधतः स्पन्दतेः यत्नमभिदधतो यते रुचिमभिदधतो रोचतेः दुःखमभिदधतो बाधतेः नाशमभिदधतो नश्यतेः दीप्तिमभिदधतो दीप्यतेश्च व्यापारमात्रार्थकतया स्पन्दतियततिरोचतिबाधतिनश्यतिदीप्यतीनां स्वार्थफलाभावान्न सकर्मकत्वमिति । अकर्मकपर्यायोऽकर्मक एव यथा शब्दायतिपर्यायः पटपटायतिप्रभृतिः लज्जतिपर्यायस्त्रपतिः रमिपर्यायो दी-

प्यत्यादिः बिभेतिपर्यायस्त्रस्यतिः बाधतिपर्यायो व्यथतिः रोचतिपर्यायस्स्वदतिः । एवमन्येऽपि बोध्याः । फलत्वं तु न धात्वर्थव्यापारजन्यत्वे सति धात्वर्थत्वं जन्यताप्रवेशेन गौरवात् किं तु धात्वर्थव्यापारे विशेषणतया भासमानत्वे सति धात्वर्थत्वम् । एवं विषयता ज्ञानं च जानातेः उद्देश्यत्वमिच्छा चेच्छतेः । साध्यत्वाख्यविषयत्वं यत्नस्य उत्पत्तिस्तदनुकूलव्यापारस्य वा करोतेः बाध्यत्वाख्यविषयत्वं द्वेषस्य द्विषेः लौकिकविषयता प्रत्यक्षं च साक्षात्करोतेः सा घ्राणजं च जिघ्रतेः सा रासनं च रसयतेः । सा चाक्षुषं च पश्यतेः सा स्पार्शनं च स्पृशतेः सा श्रावणं च विषयता शाब्दं च शृणोतेः विधेयताऽनुमितिश्च तृतीयान्तविधेयबोधकशब्दयोगे उद्देश्यताऽनुमितिश्चानुमातेः विधेयता तर्कश्च तृतीयान्ततादृशशब्दयोगे उद्देश्यता तर्कश्चापाद्यतेरर्थः । विषयतादीनां ज्ञानादौ विशेषणतयाऽन्वयित्वान्निरुक्तफलत्वं निराबाधमिति जानात्यादीनां निरुक्तसकर्मकत्वं निष्प्रत्यूहमिति । सुखवन्तमात्मानमिच्छति सुरभि चन्दनं जिघ्रति ध्वनन्तं शङ्खं शृणोतीत्यादौ सविशेषणे हीति न्यायेन सुखसौरभनिध्वानानां द्वितीयार्थेऽन्वयस्तस्य च धात्वर्थफलेऽन्वयः । एवमेवेदृशस्थले कर्मलकारोपपत्तिरत एव "दधानो निध्वानमश्रूयत पाञ्चजन्य" इति माघः । पुष्पं जिघ्रतीत्यादौ घ्राणजानुगुणघ्राणसन्निकर्षस्तदनुकूलव्यापारश्च शक्त्या भक्त्या वा जिघ्रतेरर्थ इत्युपपत्तिः । एवं धात्वर्थफलशालित्वं कर्मत्वमिति । अत्र शाब्दिकाः । आश्रयः कर्मद्वितीयार्थः । तथा हि । धातूनां फले व्यापारे च श-

क्तिः। एकपदोपात्तयोरपि परस्परमन्वयो भवति यथा तिङर्थानां साधनताघटकानामधिकरणाभावादीनां यथा वा तिङर्थकर्तृसङ्ख्ययोस्तत्र फलं विक्लित्तिसंयोगादि तादृप्येण पचिगम्यादिनाऽभिधीयते वह्निः पचतीत्यत्रोर्ध्वज्वलनत्वेन चैत्रः पचतीत्यत्राधिश्रयणावतारणफूत्कारास्तादृप्येण व्यापाराः पाचकः पचतीत्यत्र प्रयत्नत्वेन व्यापाराः पचिनाऽभिधीयन्ते रथो गच्छतीत्यत्र स्पन्दत्वेन तुरगो गच्छतीत्यत्र प्रयत्नत्वेन व्यापारा गमिनाऽभिधीयन्ते। नच सकलव्यापारानुगतस्य धर्मस्यासत्वात् सत्वे वा तेन धर्मेण व्यापाराणामप्रतीतेर्नानुगतं प्रवृत्तिनिमित्तमिति बुद्धिविशेषविषयत्वोपलक्षितधर्मविशिष्टे सर्वेनाम्नामिवाथ वा फलजनकतावच्छेदकत्वोपलक्षितधर्मविशिष्टे धातूनां शक्तिः अत एव विक्लित्तिजनकतावच्छेदकतया यो धर्मो गृहीतस्तद्धर्मविशिष्टमेव पचिनोपस्थाप्यते धात्वर्थव्यापार एव भावनोत्पादना क्रिया चेति व्यपदिश्यते तत्र प्रधानतया भासमाने व्यापारेऽधिश्रयणादौ फलस्य विक्लित्यादेरनुकूलत्वादिना संसर्गेण तिङर्थस्य वर्तमानकालस्य कर्तुश्च तत्तत्संसर्गावच्छिन्नाधेयतयाऽन्वयः कर्तरि तिङुपात्ता सङ्ख्या समवायादिना प्रथमान्तार्थश्च तादात्म्येनान्वेति प्रथमान्तार्थे सुबर्थसङ्ख्याऽन्वेति फले द्वितीयार्थस्याश्रयस्याधेयतयाऽऽश्रये प्रातिपदिकार्थस्य तादात्म्येन प्रातिपदिकार्थे सुबर्थसङ्ख्यायाः समवायादिनाऽन्वयः। एवं चैत्रस्तण्डुलं पचतीत्यादौ एकतण्डुलाभिन्नाश्रयवृत्तिविक्लित्यनुकूलाधिश्रयणादिक्रियावर्तमानकालवृत्तिरेकचैत्राभिन्नैकाश्रयवृत्तिश्चेत्यन्वयबोध-

स्तत्र फलस्य विक्लित्ते र्धातुना तण्डुलस्य प्रातिपदिकेन च लाभादनन्यलभ्यस्तण्डुलाभेदान्वययोग्य आश्रयो द्वितीयाऽर्थः । एवं कर्माख्यातस्यापि आश्रयोऽर्थः इयंस्तु विशेषः । कर्माख्याते चैत्रेण तण्डुलः पच्यते इत्यादौ तण्डुलाभिन्नाश्रये तिङर्थसंख्याया अन्वयः तृतीयाऽर्थः आश्रये चैत्राभेदस्यान्वयो न तु संख्यायाः चैत्रः तण्डुलं पचतीत्यादौ कर्त्राख्याते तिङर्थाश्रये तिङर्थसंख्याऽन्वयः द्वितीयाऽर्थाश्रये न संख्याऽन्वय इति संख्याऽतिरिक्ते विषय उभयविधवाक्यात्समानाकार एव शाब्दबोधः युज्यते च क्रियायाः प्राधान्यं "भावप्राधानमाख्यातमि"ति निरुक्तात् । तिङन्तघटितवाक्ये भावस्य क्रियायाः प्राधान्यमिति तदर्थात् । "धात्वर्थः केवलः शुद्धो भाव इत्यभिधीयते" इति परिभाषया क्रियाया भावपदार्थत्वात् । केवलः कारकाद्यनवच्छिन्नः शुद्धो धात्वर्थतावच्छेदकानवच्छिन्न इति । अत एव पचन्तिकल्पं पुरुषा इत्यादौ प्रधानीभूतक्रियायां कल्पबर्थस्य विशेषणत्वात् विशेष्यीभूतक्रियायां लिङ्गसंख्याऽन्वयायोग्यत्वात् कल्पशब्दस्य सामान्ये नपुंसकमिति क्लीवत्वं ततस्साधुत्वार्थमेकवचनम् । यदि च कल्पबर्थस्य कर्तरि प्रथमान्तार्थेऽन्वयोऽभ्युपेयते तदा विशेष्यस्य लिङ्गसंख्यान्वययोग्यतया कल्पशब्दस्य पुंस्त्वं ततो बहुवचनं च स्यात् आचार्यकल्पाः द्विजा इति वत् पचन्तिकल्पा इत्यपि स्यात् । एवं च "तिङ्ङतिङः" इति सूत्रेऽतिङ्ग्रहणं संगच्छते । तथा हि । अतिङन्तात्परस्य तिङन्तस्य निघातस्वरो भवति तत्रातिङ इति पदस्य प्रयोजनं

महाभाष्येण पश्य धावति मृग इत्यत्र प्रदर्शितं तेन तिङन्तपरे धात्वतिपदे निघातस्वरो निषिध्यते। तत्र पदविधेर्निघातस्य सामर्थ्याश्रिततया तिङन्तयोर्व्यपेक्षायामेवेदं प्रयोजनं भवति तिङन्तयोर्व्यपेक्षा तु तदैव सम्भवति यदि क्रियायाः प्राधान्यं स्यात् । तेन मृगकर्तृकधावनक्रियायाः कर्मतासंसर्गेण दृशिक्रियायामन्वयः सम्भवति क्रियाया धात्वर्थत्वात् धातोरधातुरितिपर्युदासात्प्रातिपदिकसंज्ञाविरहान्न द्वितीयाप्रसङ्गः। धावनकर्तृमृगस्य प्रधानस्य दृशिक्रियायां कर्मतयाऽन्वये मृगपदाद् द्वितीया स्यात् । द्वितीयायां लटोऽप्रथमासामानाधिकरण्ये शतृशानजापत्त्या दर्शितवाक्यप्रयोग एव न स्यादिति । एवमाश्रयस्य द्वितीयार्थत्वे तत्तत्संसर्गावच्छिन्नाधेयत्वेन सम्बन्धेन तस्य फलेऽन्वय इति व्युत्पत्तिवैचित्र्ये संसर्गविशेषलाभसम्भवात् न संसर्गविशेषावच्छिन्नत्वमाश्रये विशेषणमिति संसर्गभेदेन भिन्नं न शक्त्यानन्त्यमिति अधिकरणताया आधेयताया वा द्वितीयाऽर्थतापत्तौ न युज्यते ऽधिकरणतात्वस्य शक्यतावच्छेदकत्वे गौरवात् कालं पचतीति प्रयोगप्रसङ्गाच्च । कालहत्यधिकरणतानिरूपकत्वस्य विक्लित्तावबाधित्वात् । तत्तत्संसर्गावच्छिन्नाधिकरणत्वादेस्तत्तद्धातुसाकाङ्क्षद्वितीयाशक्यत्वे शक्त्यानन्त्यमिति । अधिकरणस्य द्वितीयार्थत्वे तु अधिकरणत्वं जातिवत्स्वरूपेणैव द्वितीयाप्रवृत्तिनिमित्तं तच्चाखण्डोपाधिर्गगनाभावस्वरूपोऽतिरिक्तो वेत्यन्यदेतत् । अधिकरणस्य संसर्गविशेषलाभो व्युत्पत्तिवैचित्र्येणेत्युक्तमिति न शक्त्यानन्त्यमिति तण्डुलं पचतीत्यादौ तण्डुलात्म-

काधिकरणस्यावयवशिथिलसंयोगस्वरूपायां विक्लित्तौ समवायघटितसामानाधिकरण्येन तदवच्छिन्नाधेयत्वेन वा सम्बन्धेनान्वयः ग्रामं गच्छतीत्यत्र ग्रामात्मकाधिकरणस्य धात्वर्थफले संयोगे समवायावच्छिन्नाधेयत्वेन सम्बन्धेनान्वयः घटं जानातीत्यादौ घटाद्यात्मकाधिकरणस्य धात्वर्थफले विषयत्वे स्वरूपसम्बन्धावच्छिन्नाधेयत्वेन सम्बन्धेनान्वयः। बर्हिर्जुहोतीत्यत्र वह्निसंयोगानुकूलो व्यापारो जुहोतेरर्थः। वह्नेर्धातुनोक्तत्वात् वह्निपदान्न द्वितीया बर्हिस्वरूपाधिकरणस्य धात्वर्थफले वह्निसंयोगे समवायावच्छिन्नाधेयत्वसम्बन्धेनान्वयः। पार्थिवद्रव्यप्रतियोगिककण्ठसंयोगानुकूलोव्यापारो भुजेरर्थः। ओदनं भुङ्क्ते इत्यादौ धात्वर्थफले पार्थिवद्रव्यप्रतियोगिककण्ठसंयोगे ओदनस्वरूपाधिकरणस्य समवायावच्छिन्नाधेयत्वसम्बन्धेनान्वयः। न च पार्थिवद्रव्यस्य फलाधिकरस्य धातुनोक्तत्वादोदनपदात्कथं द्वितीयेति वाच्यम्। धातुना फलस्य संयोगस्य प्रतियोगित्वे विशेषणतयाऽधिकरणस्याभिधानेऽपि फलेऽधिकरणस्याधेयतया विशेणत्वेनानभिधानादोदनपदाद् द्वितीयोपपत्तेः। उपविशतिना तु फले स्फिग्भुवोरधिकरणयोराधेयतया विशेषणत्वेनाभिधानात् स्फिग्भूपदाभ्यां न द्वितीया सम्भवति। एवं द्रवद्रव्यप्रतियोगिकसंयोगस्तदनुकूलव्यापारश्च सिञ्चतेरर्थः। फलेऽधिकरणस्य जलादेराधेयत्वान्वयविवक्षायां जलमभिषिञ्चतीत्यत्र जलपदाद् द्वितीयोपपत्तिः। जलादिव्यापारजन्यत्वस्य फले विवक्षायां जलेनाभिषिञ्चति रोपिततरुमित्यादौ जलपदात् तृतीयोपपत्तिः। एवमन्यत्रा-

पि धात्वर्थफले संसर्गविशेषावच्छिन्नाधेयत्वेन सम्बन्धेना- श्रयत्वस्यान्वयः सुधीभिरूहनीयः । एवं कर्तृकर्मणोरा- श्रयत्वेनाविशेषेऽपि धात्वर्थस्य व्यापारास्याश्रयः कर्ता फलस्याश्रयः कर्मेति विशेषः सम्भवति । नन्वेवं गम्यर्थस्य स्पन्दस्याश्रयत्वेन कर्तृत्वमिव तादृशस्य संयोगस्याश्रय- त्वेन कर्मत्वमपि चैत्रस्य स्यात् तथा च चैत्रो गमिक- र्मेतिव्यवहारश्चैत्रश्चैत्रं गच्छतीति द्वितीयापत्तिश्चेति चेत् न परया कर्तृसंज्ञया कर्मसंज्ञाया बाधात्कर्मव्य- वहाराप्रसक्तेः । कर्मसंज्ञाया एव द्वितीयाप्रयोजकत्वा- त्कर्मसंज्ञाविरहे द्वितीयाया अप्रसक्तेश्च न च कर्तृसंज्ञ- या कथं कर्मसंज्ञाबाध इति वाच्यम् । या पराऽनवकाशा चेति परिभाषणात् अत एव अपादानसंप्रदानकरणा- धारणकर्मणां कर्तुश्चोभयसंप्राप्तौ परमेव प्रवर्तते इति पठन्ति । एवं कर्मगतस्य फलस्य विवक्षायां प्रधानीभू- तधात्वर्थाश्रयत्वेन कर्मणः कर्तृत्वमेव यथा पच्यते त- ण्डुलः स्वयमेव एवमपादानत्वस्य विभागादेर्धातुना प्रा- धान्येन बोधनेऽपादानस्य कर्तृत्वमेव यथा गिरिरपसर- तीत्यादौ । एवं संप्रदानकरणाधिकरणानामपि कर्तृत्व- माकलनीयमित्याहुः । तार्किकास्तु आश्रयो न द्वितीया- वाच्यः । आश्रयतात्वविशिष्टस्याश्रयस्य शक्यतावच्छेद- कत्वे गौरवात् तेन रूपेण वाच्यत्वासम्भवात् । न चा- श्रयत्वमखण्डङ्गगनाभावाद्यात्मकं तस्य निरवच्छिन्नश- क्यतावच्छेदकं सम्भवतीति वाच्यम् । जातीतरस्य नि- रवच्छिन्नावच्छेदकत्वासंभवात् । अन्यथा पृथिवत्वादि- चतुष्टयान्यतमत्वस्वरूपस्याखण्डोपाधेर्द्रव्यारम्भकतावा-

मवच्छेदकत्वसम्भवे गुरुणः स्पर्शवत्त्वस्यानवच्छेदकत्वं स्यात् । यद्यन्यतमत्वस्य पृथ्व्यादिभिन्नप्रतियोगिघटितस्य भेदस्य नाखण्डत्वं तदा गगनादिप्रतियोगिघटितस्य गगनाभावादेरपि नाखण्डत्वं तुल्यत्वात् । निरवच्छिन्नविषयतया गगनाभावादेरप्रतीतेः । गगनाभाव इति प्रतीतौ गगनप्रतियोगिकस्य द्रव्यादिषट्कान्योन्याभावविशिष्टस्य विषयत्वात् । न चातिरिक्तमेवाश्रयत्वं द्वितीयाप्रवृत्तिनिमित्तमिति वाच्यम् । शब्दप्रवृत्तिनिमित्तानुरोधेनातिरिक्तवस्तुकल्पनाया अन्याय्यत्वात् । अन्यथा समासप्रवृत्तिवादिनां खपुष्पादिशब्दप्रवृत्तिनिमित्ततयाऽतिरिक्तवस्तुकल्पनाप्रसङ्गः । अथ खपुष्पादिकमतिरिक्तं कुसुममेवेति चेत् तर्हि अतिरिक्तखपुष्पादिसदृशस्यातिरिक्तवस्तुनो द्वितीयार्थत्वकल्पनाऽपि चास्या खपुष्पं पश्येत्यादौ कर्मत्वेन कुसुमस्य खपुष्पस्य लाघवात् द्वितीयार्थत्वं स्यात् । अथाधिकरणत्वाधेयत्वयोरातिरेक्यं दीधितिकृद्भिर्युक्त्या व्यवस्थापितमिति खपुष्पे न कापि तादृशी युक्तिरिति चेत् तत्राप्यधिकरणताऽऽधेयत्वयोरातिरैक्यं दीधितिकृद्भिरङ्गीकृतम् । अन्यथाऽधिकरणता इत्याकारकप्रतीत्यनुपपत्तेः प्रकारत्वानिरूपितविशेष्यतायाः प्रकारं विना प्रकारतायाश्चासिद्धेः । दर्शितप्रतीतावधिकरणत्वं विनाऽन्यस्य प्रकारत्वायोगात् । अगत्याऽधिकरणतात्वविशिष्टस्य द्वितीयाप्रवृत्तिनिमित्तत्वमिति चेन्न । लाघवादधिकरणतात्वस्यैव द्वितीयाप्रवृत्तिनिमित्तत्वाङ्गतिसम्भवात् । न चाधिकरणतानां तत्तत्संसर्गावच्छिन्नानां द्वितीयार्थत्वे

शक्यानन्वयमधिकरणतासामान्यस्य तथात्वे कालं पचतीति प्रयोगप्रसङ्ग इति पूर्वमेवोक्तमिति वाच्यम् । अधिकरणतासामान्यस्यैव द्वितीयार्थत्वात् । अधिकरणतायाः स्वनिरूपिततत्तत्संसर्गावच्छिन्नाधेयत्वसम्बन्धेन फलेऽन्वयोपगमात् । कालिकविशेषणतासम्बन्धावच्छिन्नाधेयत्वस्य विक्लित्तिसम्बन्धत्वानभ्युपगमात् । न च तण्डुलं पचतीत्यत्र तण्डुलाधिकरणतायाः स्वनिरूपितेन तण्डुलसामानाधिकरण्यावच्छिन्नाधेयत्वेन सम्बन्धेन फले विक्लित्तावन्वयेन सम्बन्धस्य स्वनिरूपितत्वविशेषणं गौरवमावहत्याश्रयस्य तादृशाधेयत्वसम्बन्धेनान्वये स्वनिरूपितत्वाप्रवेशान्न सम्बन्धगौरवमित्याश्रयस्यैव द्वितीयार्थत्वं युक्तमिति वाच्यम् । सम्बन्धगौरवस्याकिंचित्करत्वात् । वाच्यतावच्छेदकगौरवस्य लक्षणाज्ञाने हेतुतागौरवापादकत्वात् द्वितीयाशक्याधिकरणसम्बन्धीतिलक्षणाज्ञानस्याधिकरणतात्वविशिष्टाधिकरणत्वावच्छिन्नाधिकरणविषयतानिरूपितसम्बन्धविषयताकत्वेन हेतुत्वं वाच्यं तदपेक्षया द्वितीयाशक्याधिकरणतासम्बन्धीतिज्ञानस्याधिकरणतात्वावच्छिन्नाधिकरणताविषयतानिरूपितसम्बन्धविषयताकत्वेन हेतुत्वं लघुभूतमिति सम्भवति लघौ गुरौ न शक्यतावच्छेदकत्वं मन्यन्ते तान्त्रिकाः । नन्वाश्रयस्याधिकरणताया वाऽऽधेयत्वसम्बन्धेन फलेऽन्वयोपगमे प्रातिपदिकार्थस्याधेयत्वेन कर्मत्वाख्यसम्बन्धेन धात्वर्थफलेऽन्वयोऽस्तु तत्र द्वितीयासमभिव्याहारस्तन्त्रमित्येवास्तु किमधिकरणस्याधिकरणताया वा द्वितीयार्थत्वकल्पनया प्र-

त्युत द्वितीयान्ततिङन्तवाक्याकाङ्क्षाज्ञानघटितशाब्द-सामग्र्यां द्वितीयाजन्याया आश्रयोपस्थितेः प्रवेशेन गौरवमाधीयते इत्यनया रीत्या सर्वा विभक्तिर्निरर्थिकैव। न च तण्डुलं पचति न जलमित्यादौ जलकर्मकपाकस्याप्रसिद्धेस्तत्कर्तृत्वाभावो न प्रत्येतुं शक्यते किं तु पाके जलकर्मकत्वाभावः तत्र द्वितीयाया निरर्थकत्वे कर्मणोऽनुपस्थितेर्न जलकर्मत्वाभावप्रतीतिः सम्भवतीति वाच्यम्। तत्र कर्मत्वाख्याधेयत्वसम्बन्धेनावच्छिन्नप्रतियोगिताकस्य जलाभावस्यैव पाके प्रतीतेः आधेयत्वसम्बन्धस्य वृत्त्यनियामकतया प्रतियोगितानवच्छेदकत्वे त्वाश्रयस्य द्वितीयार्थतावादेऽपि तत्सम्बन्धावच्छिन्नप्रतियोगिताकाश्रयाभावाप्रसिद्धेर्जलकर्मकत्वाभावप्रतीत्यनुपपत्तेः। न चाश्रयस्य द्वितीयार्थत्वे जलं न पचतीत्यत्र जलभेद आश्रये तस्य पाकेऽन्वयस्तथा च जलान्यकर्मकत्वं पाके प्रतीयत इति नानुपपत्तिरिति वाच्यम्। प्रकृत्यर्थाभावस्य प्रत्ययार्थे प्रत्ययार्थाभावस्य प्रकृत्यर्थे चान्वयस्याव्युत्पन्नत्वात् माषतण्डुलोभयं पचत्यपि तण्डुलं न पचतीति-प्रयोगापत्तेश्च तण्डुलान्यकर्मकत्वस्य माषकर्मकपाके सत्त्वात्। अथ द्वितीयाया निरर्थकत्वं न युज्यते। तथा हि। कर्मतासंसर्गकबोधे द्वितीयासमभिव्याहारो न हेतुः "देवाकर्णाय संग्रामे चापेनासादिताश्शरा" इत्यादौ चापकर्तृकासादनकर्मणां कर्मतासंसर्गेणाकर्णेऽन्वयबोधस्य विना द्वितीयां दर्शनात्। न चात्र वाक्यार्थस्य कर्मतयाऽन्वयेऽपि शब्दान्तरार्थाविशेषितप्रातिपदिकार्थस्य कर्मतासंसर्गेण बोधे द्वितीयासमभिव्याहारो हेतुः प्रकृते आसा-

दितशब्दार्थविशेषितानां शराणामाकर्णने कर्मतयाऽन्वयेऽपि न व्यभिचार इति वाच्यम् । नीलं घटं पश्येत्यादौ नीलपदार्थविशेषितस्य घटस्य कर्मतया दर्शनेऽन्वयबोधादन्वयव्यभिचारादिति द्वितीयाया आश्रयोऽर्थः तेन वाक्यार्थस्य कर्मतासंसर्गेणान्वयबोधे द्वितीयार्थस्य न विशेषतया न प्रकारतया भानमिति द्वितीयाज्ञानस्य तज्जन्योपस्थितेर्वा न व्यभिचार इति जलं न पचतीत्यत्र जलाश्रयाभावः पाके प्रतीयते वृत्त्यनियामकसम्बन्धस्य प्रतियोगितानवच्छेदकत्वे बीजाभावादिति चेन्न । यतो- वृत्त्यनियामकसम्बन्धो न प्र तियोगिमत्ताबुद्धिजनकः । गगनादिसंयोगस्य मूर्ते सत्त्वेऽपि मूर्तं गगनादिमत् गगनादि मूर्तवद्वेति प्रतीत्यनुदयात् तथा च प्रतियोगिमत्ताबुद्ध्यजनकत्वेन व्यधिकरणसम्बन्धतुल्यो वृत्त्यनियामकसंबन्ध इति व्यधिकरणसंबन्धावच्छिन्नप्रतियोगिताकस्येव वृत्त्यनियामकसंबन्धावच्छिन्नप्रतियोगिताकस्याप्यभावस्य केवलान्वयित्वमित्येव वृत्त्यनियामकसंबन्धस्य प्रत्ययार्थाभावप्रतियोगितानवच्छेदकत्वे बीजमिति नञा तत्संबन्धावच्छिन्नप्रत्ययार्थाभावो न बोध्यते । यदि बोध्येत तदा वृत्त्यनियामकसंबन्धेन प्रतियोगिसंबन्धिनि यथा मूर्ते न गगनादि गगनादौ न मूर्तमित्यादि प्रयोगस्तथा तण्डुलं पचत्यपि तण्डुलं न पचतीति प्रयोगः स्यात् । न चैवं द्वितीयाया निरर्थकत्वेऽपि जलं न पचति तण्डुलं न पचतीत्यादावन्वयबोधानुपपत्तिस्तदवस्थेति वाच्यम् । आश्रयस्याधिकरणताया वा द्वितीयार्थत्ववादे द्वितीयाया निरर्थकत्ववादे च

सर्वपक्षेऽनुपपत्तेराधेयत्वस्य द्वितीयार्थत्वं युज्यत इति चेत् एवमेवैतत् अत एव परसमवेतधात्वर्थफलशालित्वं कर्मत्वमिति तान्त्रिका वदन्ति । तेषामयमाशयः । द्वितीयाकाङ्क्षाप्रयोजकतावच्छेदकधर्मवत्त्वं सकर्मकत्वं तादृशो धर्मो नानाविधः । पचिगम्यादीनामधिकरणाविशेषितफलव्यापारोभयवाचकत्वं तथा शब्दायत्यादेरधिकरणविशेषितफलवाचकत्वान्न द्वितीयाऽऽकाङ्क्षा रमत्यादेर्द्वितीयार्थभेदान्वययोग्यार्थकत्वविरहान्न द्वितीयाऽऽकाङ्क्षा यत्यादीनां व्यापारमात्रवाचकतया फलावाचकत्वान्न द्वितीयाऽऽकाङ्क्षा शीङ्स्थासामधिपूर्वकत्वं तथा वसस्तु उपान्वध्याङन्यतमपूर्वकत्वं तथा अधिकरणविशेषितफलवाचकानां शब्दायत्यादीनां द्वितीयार्थभेदान्वयायोग्यार्थकानां रमत्यादीनां फलावाचकानां यत्यादीनां च कालादिवाचकशब्दोत्तरद्वितीयाभिन्नद्वितीयानिराकाङ्क्षत्वस्वरूपाकर्मकत्वेन व्यवह्रियमाणानां णिजन्तत्वं तथा न तु शाब्दिकोक्तं सकर्मकत्वमधिशीङादावकर्मकणिजन्ते चाव्याप्तेः । एवं धातुसाकाङ्क्षद्वितीयार्थत्वं कर्मत्वं तदपि नानाविधं अधिशीङ्स्थासादीनामाधारत्वम् अकर्मकणिजन्तानामणिजन्तस्वकर्तृत्वं पचिगम्यादीनां परसमवेतधात्वर्थफलशालित्वम् इदं कर्तृत्वं च गतिबुध्यशनार्थकानां शब्दकर्मकाणां च णिजन्तानां तत्र धात्वर्थफलस्य धातुना लाभात् परसमवेतत्वं द्वितीयार्थः तत्रापि परत्वं भेदः समवेतत्वमाधेयत्वं खण्डशो द्वितीयार्थः तत्र प्रातिपदिकार्थ आधेयत्वे निरूपितत्वसंसर्गेण भेदे च तत्तद्व्यक्तित्वावच्छिन्न-

प्रतियोगितासंबन्धेनान्वेति आधेयत्वं फले स्वरूपेण भेदो व्यापारे सामानाधिकरण्येनान्वेति । एवं ग्रामं गच्छति चैत्र इत्यादावेकग्रामवृत्तिसंयोगानुकूलाया एकग्रामवृत्तेश्च क्रियाया अनुकूलकृतिमानेकः चैत्र इति शाब्दबोधः । तत्तद्व्यक्तित्वावच्छिन्नप्रतियोगिताया भेदसंबन्धोपगमान्मल्लो मल्लं गच्छतीत्यादौ नान्वयबोधानुपपत्तिरन्यथा मल्लत्वावच्छिन्नप्रतियोगिताकभेदसमानाधिकरणाया मल्लगमनक्रियाया अप्रसिद्धेः शाब्दानुदयः स्यात् । न च शब्दार्थे भेदेऽन्वयितावच्छेदकावच्छिन्नप्रतियोगितैव संबन्धो व्युत्पन्न इति वाच्यम् । नञर्थभेद एव तथाव्युत्पत्तेः । अथ वा भेदे प्रातिपदिकार्थ आधेयत्वसंबन्धेनान्वेति भेदः प्रतियोगितावच्छेदकतासंबन्धेन व्यापारेऽन्वेति । दर्शितस्थले गम्यमल्लवृत्तिभेदस्य गन्तृमल्लगमने प्रतियोगितावच्छेदकतायाः सत्वात् गन्तृभेदस्य गम्ये सत्वात् नानुपपत्तिरिति । ननु भेदांशे द्वितीयाशक्तिकल्पनमप्रामाणिकं भेदानुभवस्य विवादग्रस्तत्वात् । कर्तृसंज्ञया कर्मसंज्ञाया बाधात् चैत्रश्चैत्रं गच्छतीति प्रयोगप्रसक्त्यभावादित्युक्तत्वादिति चेन्न । निषेधप्रतीत्यन्यथाऽनुपपत्तेराख्यातवादे दीधितिकृद्भिः प्रमाणत्वेनोक्तत्वात् । तथा हि खगो भूमिं गच्छति न तु स्वमिति सर्वजनीनः प्रयोगस्तत्र भूमिकर्मकगमनकर्तृत्वं स्वकर्मकगमनकर्तृत्वाभावश्चेत्युभयमथ वा स्वकर्मकत्वाभाववतो भूकर्मकगमनस्य कर्तृत्वं खगे प्रतीयते । तत्र स्वपदोत्तरद्वितीयाऽऽधेयत्वमात्रमभिधत्ते यदि तदा गमिफले संयोगे स्वाधेयत्वस्य सत्वान्न तस्य निषेधः । न वा

गमने स्वाधेयसंयोगजनकत्वस्य सत्त्वात्तस्य निषेधः । न वा स्वाधेयसंयोगजनकगमनकर्तृत्वस्य खगे सत्वात्तस्य निषेधो नञा बोधयितुं शक्य इति निषेधप्रतीत्यनुपपत्तिः भेदस्य द्वितीयार्थत्वे तु स्वपदार्थविहगवृत्तिभेदस्य प्रतियोगितावच्छेदकताया विहगकर्तृकगमने विरहात्तस्य निषेधो नञा बोध्यत इति निषेधप्रतीत्युपपत्तिः । एवं रूपं न गच्छतीत्यादौ रूपवृत्तित्वाभाव एव गमिफले संयोगे नञा बोध्यते रूपसमवेतसंयोगस्याप्रसिद्धेः रूपकर्मकगमनकर्तृत्वाभावस्य बोधयितुमशक्यत्वात् । न च गम्यादिसमभिव्याहृतद्वितीयायाः समवायाद्यवच्छिन्नाधेयत्वं यद्यर्थस्तदा शक्त्यानन्त्यं जातिमभावं वा न गच्छतीत्यादौ निषेधप्रतीत्यसम्भवश्च जातिनिरूपितस्याभावनिरूपितस्य च समवायावच्छिन्नाधेयत्वस्याप्रसिद्धेरिति वाच्यम् । आधेयतात्वेनाधेयतासामान्यैव द्वितीयार्थत्वेन शक्त्यानन्त्यविरहात् गम्यादिसमभिव्याहारे तु समवायावच्छिन्नाधेयत्वीयस्वरूपसंबन्धेन फले संयोगादावाधेयत्वस्यान्वयोपगमात् दर्शितस्थले जातिनिरूपितस्याभावनिरूपितस्य चाधेयत्वस्य समवायावच्छिन्नाधेयत्वीयस्वरूपसंसर्गावच्छिन्नप्रतियोगिताकमभावं संयोगे बोधयता नञा निषेधप्रतीतिसम्भवाच्च । कालिकविशेषणतासंबन्धावच्छिन्नाधेयत्वीयस्वरूपसंसर्गस्य द्वितीयार्थाधेयताया अनन्वयोप्रयोजकत्वात् कालं पचतीत्यादिको न प्रयोगः अत एव कालिकविशेषणतादिघटितव्यापकत्वार्थं पृथगनुशासनमित्यादिकं वक्ष्यते । एवं स्वावयवावच्छेद्याधिकरणतानिरूपितत्वसंबन्धेन

प्रकृत्यर्थस्य द्वितीयार्थाधेयत्वेन गम्यादिफलसंयोगाद्यन्वययोग्येऽन्वयो वक्तव्यः । स्वपदं परिचायकमवयवः समवायी तेन गगनं चेवत्रो कालं दिशं वा गच्छतीति न प्रयोगः । न च मनः परमाणुं गच्छतीतिप्रयोगोऽनुपपन्न इति वाच्यम् । इष्टत्वात् । परमाणुमनसोर्मिथः संयोगसत्त्वेऽपि गगनघटयोरिव गम्यगन्तृभावानभ्युपगमात् । गगनं गच्छतीत्यादौ गगनपदं दर्शितसम्बन्धावच्छिन्नप्रतियोगिताकाकाशाभावपरं तादृशाकाशाभावस्य विशेषणतया द्वितीयार्थाधेयत्वेऽन्वय इति यदि च वृक्षादौ संयोगो व्याप्यवृत्तिर्न तु तदधिकरणता तदा द्वितीयार्थाधेयत्वस्य स्वनिरूपकप्रकृत्यार्थात्मकाधिकरणावयवनिष्ठावच्छेदकतानिरूपितावच्छेद्यतासमानाधिकरणेन समवायावच्छिन्नाधेयत्वीयस्वरूपसंसर्गेण गमिफले संयोगे त्यजिफले विभागे चान्वयस्तेन गगनादिकं गच्छति त्यजति वेति न प्रयोगः । दर्शितसंसर्गेण द्वितीयार्थाधेयत्वस्य संयोगे विभागे च बाधात् । गगनादिकं गच्छति त्यजति वा इत्यादौ द्वितीयार्थाधेयत्वस्य दर्शितसंसर्गावच्छिन्नप्रतियोगिताकोऽभावः संयोगे विभागे चान्वेतीति तत्प्रयोगोपपत्तिः । प्राचीं गच्छतीत्यादौ दिगुपाधिमत उदयगिरिसंनिहितदेशस्य प्राचीपदेन प्रतिपादनान्नानुपपत्तिः । एवं शकुनिः खं गच्छतीत्यादौ खशब्देन वायुमण्डलस्य प्रतिपादनान्नानुपपत्तिः । एवं प्रयोक्तृपुरुषाधिष्ठितदेशावधिकगमनकर्तृदेशसमवेतपरत्वनिरूपितापरत्वस्य समानाधिकरणः संयोग आङ्पूर्वस्य गमेः फलं तादृशापरत्वस्यासमानाधि-

करणः संयोगः आङ्वर्जितस्य गमेः फलमिति तेन प्र-
यागात्काशीमागच्छति शक्रप्रस्थं गच्छतीति प्रयोगः प्र-
यागात् शक्रप्रस्थमागच्छति काशीं गच्छतीति न प्रयोगः
पाटलिपुत्रस्थानामिति। ननु भेदस्य द्वितीयार्थताभ्यु-
पगमेन विहगो भूमिं गच्छति न तु खमित्यादौ निषे-
धप्रतीत्युपपादनेऽपि चैत्रो ग्रामं गच्छति न तु मनुष्य-
मित्यादौ निषेधप्रतीत्यनुपपत्तिस्तदवस्यैव गम्यर्थसंयोगे
चैत्रात्मकमनुष्यसमवेतत्वस्य व्यापारे च मनुष्यान्तरवृ-
त्तिभेदस्य प्रतियोगितावच्छेदकतायासत्वात् । द्वितीयार्थयोराधेयत्वभेदयोर्निषेधस्य नञा बोधयितुमशक्य-
त्वात् चैत्रो मनुष्यं गच्छतीतिप्रयोगापत्तिश्च ।
न च तत्तन्मनुष्यनिष्ठान्योन्याभावप्रतियोगितावच्छेद-
कं तत्तन्मनुष्यवृत्तिसंयोगजनकत्वविशिष्टं यावत् ता-
वदभावकूट एव नञा प्रतिपाद्यते । तथा च चैत्रात्म-
कमनुष्यवृत्तिसंयोगजनकत्वविशिष्टं यत् चैत्रात्मकम-
नुष्यवृत्तिभेदप्रतियोगितावच्छेदकत्वं चैत्रकर्मकान्यदीयग-
मनेऽस्ति तदभावस्य नञा बोधनात् मनुष्यान्तर-
कर्मकचैत्रकर्तृकगमने यत्किंचिन्मनुष्यवृत्तिसंयोगजनक-
त्वविशिष्टस्य यत्किंचिन्मनुष्यनिष्ठभेदप्रतियोगितावच्छे-
दकत्वस्य विरहेऽपि चैत्रो मनुष्यं न गच्छतीति न प्रयोगः
तादृशतावदभावकूटस्य तादृशचैत्रगमनेऽसत्वादिति वा-
च्यम् । भेदस्यैव द्वितीयार्थतया तावदवच्छेदकत्वस्यानु-
पस्थित्या तदभावग्रहासम्भवात् तावदभावकूटस्य युगस-
हस्रेणापि ग्रहीतुमशक्यत्वाच्च । तस्माद् द्वितीयाया भेदा-
र्थकत्वेऽपि निषेधप्रयोगोपपत्तिर्न सम्भवतीति चेन्न । यत-

न्तो ग्रामं गच्छति न तु मनुष्यमित्यादौ स्वसमवेतसंयो-
गजनकत्वस्वप्रवृत्तिभेदप्रतियोगितावच्छेदकत्वोभयसंब-
न्धावच्छिन्नप्रतियोगिताको मनुष्यसामान्याभावो गमने
नञा बोध्यते । संयोगेन घटो नास्तीत्यत्र तृतीयान्तसं-
योगपदमिव द्वितीया प्रतियोगितावच्छेदकसंसर्गानुवा-
दकतयोपयुज्यते अतो न काऽप्यनुपपत्तिः । न च दर्शि-
तसंबन्धोभयस्य वृत्त्यनियामकत्वात्कथं प्रतियोगितावच्छे-
दकत्वमिति वाच्यम् । यतः स एव वृत्त्यनियामकः स्वाव-
च्छिन्नप्रतियोगिताकतयाऽभावस्य जगद्वृत्तित्वप्रयोजको
यः संबन्धः प्रतियोगिवैशिष्ट्यबुद्धिं न जनयति यथा गग-
नादिसंयोगो गगनादिवैशिष्ट्यबुद्धिं न जनयति तदव-
च्छिन्नप्रतियोगिताकोऽभावो जगद्वृत्तिः प्रकृते दर्शित-
संबन्धेन यस्य गमने मनुष्यात्मकप्रतियोगिवैशिष्ट्यबुद्धि-
जनकत्वान्न तदवच्छिन्नप्रतियोगिताको जगद्वृत्तिरिति
स्वावच्छिन्नप्रतियोगिताकाभावस्य केवलान्वयित्वप्रयोज-
कत्वस्वरूपस्य वृत्त्यनियामकसंबन्धप्रतियोगितानवच्छेद-
कत्वबीजस्य दर्शितोभयसंबन्धे विरहान्नानुपपत्तिरिति ।
न चैवमधिकरणं द्वितीयार्थोऽस्तु तस्यैव दर्शितोभयसंब-
न्धावच्छिन्नप्रतियोगिताकोऽभावः प्रकृते प्रतीयेतेति वा-
च्यम् । अधिकरणस्य द्वितीयार्थत्वे शक्यतावच्छेदकगौ-
रवस्य दर्शितत्वात् । न चैवं दर्शितस्थले संसर्गानुवादक-
तया साधुत्वे द्वितीया सर्वत्र साधुत्वार्थमेवास्तु किमाधे-
यत्वादौ तस्याः शक्तिकल्पनेन ग्रामं गच्छतीत्यत्र दर्शि-
तोभयसंबन्धेन गम्यर्थे व्यापारे प्रातिपदिकार्थस्य ग्राम-
स्यान्वयः तादृशसंसर्गेण प्रातिपदिकार्थप्रकारकशाब्द-

बुद्धौ द्वितीयान्तप्रातिपदिकजन्या पदार्थोपस्थितिः गम्यादिधातुजन्या व्यापारोपस्थितिश्च कारणं तेन ग्रामो-ग्रामात् ग्रामेण वा गच्छतीत्यादौ न तथा शाब्दबुद्धिः ग्रामोपस्थितेर्द्वितीयान्तपदाजन्यत्वात् न वा घटपदेन लक्षणया स्पन्दोपस्थितावपि ग्रामं घट इत्यादौ तथाशाब्दबोधः स्पन्दोपस्थितेर्धातुजन्यत्वाभावात् । एवं सर्वत्रैव स्ववृत्तिफलसंबन्धित्वस्ववृत्तिभेदप्रतियोगितावच्छेदकत्वोभयसंबन्धेन प्रातिपदिकार्थप्रकारकशाब्दबुद्धौ द्वितीयान्तपदजन्योपस्थितिः सामान्यतः कारणं धातुजन्योपस्थितिस्तु विशेषतः कारणं तेन स्पन्दिजन्योपस्थितेरहेतुत्वाद् ग्रामं स्पन्दते इत्यादौ न तथा शाब्दबोधः । न च दर्शितोभयसंबन्धस्य कर्मत्वात्मकत्वात्कर्मतासंसर्गेण प्रातिपदिकार्थप्रकारकशाब्दे द्वितीयान्तपदजन्योपस्थितेर्व्यभिचारः "देवाकर्णय संग्रामे चापेनासादिताः शराः" इत्यादौ पूर्वमेव दर्शित इति कथमीदृशः कार्यकारणभाव इति वाच्यम् । आसादनकर्मशराणां वाक्यार्थत्वात्प्रातिपदिकार्थत्वविरहात् व्यभिचाराप्रसक्तेः । कृदन्ततद्धितान्तसमासानां वाक्यानां प्रातिपदिकसंज्ञाविधानाद्वाक्यार्थस्यापि तेषामर्थस्य प्रातिपदिकार्थत्वमक्षतमेवेति कर्मतासंसर्गेण कृदन्तादिवाक्यार्थप्रकारिका शाब्दधीः प्रातिपदिकार्थप्रकारिकैवेति पाचकमानय दाक्षिं भोजय स्वेष्टदेवं पूजयेत्यादौ न द्वितीयान्तपदजन्योपस्थितेरन्वयव्यभिचारः । एवं खगो भुवं गच्छति न तु खमित्यत्रापि दर्शितोभयसंबन्धात्मककर्मत्वसंसर्गेण भूप्रकारिकायास्तथाविधसंसर्गावच्छिन्नप्रतियोगिताकखाभावप्रकारिका-

यास्तथाविधसंसर्गावच्छिन्नप्रतियोगिताकस्वाभावप्रकारिकाया एव शाब्दधियः समभ्युपगमः । वृत्त्यनियामकसंबन्धस्य प्रतियोगितावच्छेदकतायास्त्वयैवाभ्युपगमादिति चेन्न । वृत्त्यनियामकसम्बन्धस्य प्रतियोगितावच्छेदकत्वेऽपि द्वितीयायाः सार्थकत्वस्यावश्यकत्वात् चैत्रो ग्रामं गच्छति न तु मनुष्यमित्यादौ क्वचित्साधुत्वार्थत्वेऽपि सर्वत्र साधुत्वमात्रार्थतया द्वितीयायाः कर्मत्वाद्यनर्थकत्वे मानाभावात् । न च कर्मत्वाद्यर्थकत्वे मानाभावात् द्वितीयाया निरर्थकत्वमिति वाच्यम् । द्वितीया न कर्मत्ववाचिकेति ज्ञानेऽपि ग्रामं गच्छतीत्यत्र कर्मतासंसर्गेण ग्रामस्य गमनेऽन्वयप्रसङ्गात् । ग्रामीयं न कर्मत्वमिति बाधग्रहेऽपि कर्मतासंसर्गेण ग्रामस्य गमनेऽन्वयबोधप्रसङ्गाच्च । तादृशबाधस्य कर्मतासंसर्गकग्रामान्वयबुद्धावविरोधित्वात् । एवं गमनं न ग्रामकर्मताकमिति बाधकालेऽपि कर्मतासंसर्गेण ग्रामस्यान्वयबोधः स्यात् । तत्संसर्गाभाववत्ताज्ञानस्य तत्संसर्गकबुद्धावविरोधित्वात् । किं च द्वितीयाया निरर्थकत्वे कर्म गच्छतीतिप्रयोगः स्यात् । कर्मणां कर्मतासंसर्गेण ग्रामेऽन्वयबोधे निष्प्रत्यूहत्वात् । सार्थकत्वे तु न तथाप्रयोगः सम्भवति । कर्मेत्यत्र द्वितीयाया निराकाङ्क्षत्वात् । शाब्दिकमते कर्मणो द्वितीयार्थत्वात्कर्म कर्मेत्यभेदान्वयबोधो न भवति उद्देश्यतावच्छेदकविधेयतावच्छेदकयोर्भेदस्य तथान्वयबोधे तन्त्रस्य विरहान्न तथाप्रयोगः न्यायमते तु द्वितीयाया आधेयत्वमर्थः । निरूपकतया आधेयतावान् कर्मशब्दार्थः । तथा च कर्मेति द्वितीयान्तप्रयोगे-

द्वितीयार्थाधेयत्वस्योद्देश्यत्वे कर्मशब्दार्थस्याधेयतावत-स्तत्र विधेयत्वं न सम्भवति अभेदातिरिक्तसम्बन्धेनोद्देश्य-विधेयभावेन प्रकृतिप्रत्ययार्थयोरन्वये प्रकृत्यर्थतावच्छे-दकप्रत्ययार्थयोरन्योन्याभावस्य न कर्म गच्छतीति प्र-योगः । एवमधिकरणमाश्रयं वा गच्छतीति न प्रयोगः । अधिकरणाश्रयशब्दयोर्निरूपकतया ऽऽधेयतावदर्थकत्वा-त् । अधिकरणतावदर्थकत्वे तु आश्रयं श्रयन्तीतिवत् अ-धिकरणमाश्रयं वा गच्छतीतिप्रयोगो भवत्येव । ननु भवतु द्वितीयाया आधेयत्वमर्थः । खगो भुवं गच्छति न तु खमित्यादौ निषेधप्रतीत्यनुरोधेन भेदोऽप्यर्थः स्यात् । तथाऽपि यन्मते वृत्त्यनियामकः सम्बन्धः प्रतियोगिताव-च्छेदको भवति तन्मते खगो भुवमित्यादौ दर्शित-स्थले चैत्रो ग्रामं गच्छति न तु मनुष्यमित्यादौ च कथं निषेधप्रतीतिः प्रतियोगितावच्छेदकत्वसम्बन्धस्य वृ-त्त्यनियामकतया तत्संसर्गावच्छिन्नप्रतियोगिताकस्य ख-वृत्तिभेदाभावस्याप्रसिध्या खगकर्तृकगमने तत्प्रतीतेर-सम्भवात् । एवं मनुष्यवृत्तिभेदप्रतियोगितावच्छेदकत्वो-भयसम्बन्धस्य वृत्त्यनियामकतया तत्सम्बन्धावच्छिन्नप्र-तियोगिताकमनुष्यसामान्याभावस्याप्रसिध्या चैत्रकर्तृ-कगमने तत्प्रतीतेरसम्भवादिति चेन्न तन्मतेऽपि निषेध-प्रतीतिः सम्भवति द्वितीयार्थभेदस्य स्वसमानाधिकरण-फलसम्बन्धित्वप्रतियोगितावच्छेदकत्वोभयसम्बन्धाव-च्छिन्नविशेषणतासम्बन्धेन सर्वत्र व्यापारेऽन्वयः । एवं ख-गो भुवं गच्छति न तु खमित्यत्र खवृत्तिभेदस्य स्वसमा-नाधिकरणसंयोगजनकत्वसम्बन्धेनावच्छिन्नया विशेष-

णतया खगकर्तृके गम्यर्थव्यापारे सत्वेऽपि प्रतियोगिता-वच्छेदकत्वसम्बन्धेनावच्छिन्नया विशेषणतयाऽसत्वात् तादृशसंयोगजनकत्वप्रतियोगितावच्छेदकत्वोभयसम्बन्धावच्छिन्नविशेषणतासंसर्गावच्छिन्नप्रतियोगिताकस्य स्ववृत्तिभेदाभावस्य गम्यर्थव्यापारे निराबाधत्वात्स्ववृत्तिभेदनिषेधप्रतीत्युपपत्तिः। चैत्रो ग्रामं गच्छति न तु मनुष्यमित्यत्र चैत्रात्मकमनुष्यवृत्तिभेदस्य प्रतियोगितावच्छेदकत्वसम्बन्धेनावच्छिन्नया मनुष्यान्तरवर्तिभेदस्य तादृशसंयोगजनकत्वसम्बन्धेनावच्छिन्नया विशेषणतया चैत्रकर्तृके गम्यर्थव्यापारेऽसत्वात् तादृशसंयोगजनकत्वप्रतियोगितावच्छेदकत्वोभयसम्बन्धावच्छिन्नविशेषणतासंसर्गावच्छिन्नप्रतियोगिताकस्य मनुष्यवृत्तिभेदसामान्याभावस्य तथाविधगम्यर्थव्यापारे निराबाधत्वात् मनुष्यवृत्तिभेदनिषेधप्रतीत्युपपत्तिः दर्शितोभयसम्बन्धावच्छिन्नविशेषणतया भूवृत्तिभेदस्य खगकर्तृकगमने ग्रामवृत्तिभेदस्य चैत्रकर्तृकगमने सत्वात् तदन्वयोपपत्तिः विशेषणता तु तत्तदधिकरणस्वरूपातिरिक्ता वेत्यन्यदेतत्। उभयथाऽपि तस्या वृत्तिनियामकत्वमक्षतमेव। यत्तु ग्रामं गच्छतीत्यादौ परसमवेतत्वे भेदसामानाधिकरण्यात्मके द्वितीयाया लक्षणा न तु भेदादौ शक्तिर्द्वितीयान्तार्थविशेषितभेदसामानाधिकरण्यं व्यापारे फले वाऽन्वेतीति शाब्दिकैरुक्तं तन्न विचारसहं तथा हि द्वितीयाऽन्तार्थः प्रतियोगितया भेदे तत्सामानाधिकरण्यं व्यापारेऽन्वेतीत्ययं पक्षो न सम्भवति मल्लो मल्लं गच्छतीत्यादावन्वयितावच्छेदकीभूतमल्लत्वावच्छिन्नप्रतियोगि-

ताकमल्लभेदस्य मल्लवृत्तिव्यापारे सामानाधिकरण्यासम्भवात् शब्दार्थाभावेऽन्वयितावच्छेदकेतरधर्मावच्छिन्नप्रतियोगितया पदार्थान्वयस्याव्युत्पन्नत्वात् । न वा द्वितीयान्तार्थं आधेयतया व्यापारवान् प्रतियोगितया भेद तत्सामानाधिकरण्यं फलेऽन्वेतीत्यपि सम्भवति ग्रामं गच्छतीत्यत्र व्यापारवतस्ताद्रूप्येणानुपस्थितेः । तव मते त्वाश्रयत्वेन तिङोपस्थापितस्य तस्य धात्वर्थविशेषणतया अन्वितत्वात् द्वितीयालक्ष्यप्रविष्टभेदेऽन्वयासम्भवात् विशेषणतयाऽन्वितस्यापि पदान्तरार्थान्वयोपगमे तु मृगो धावति पश्येत्यत्रापि मृगे विशेषणतयाऽन्वितस्य धावनस्य दृश्यर्थान्वयप्रसङ्गात् । भेदस्य लक्ष्यैकदेशतया तव पदार्थान्वयस्य सर्वमतेऽप्यव्युत्पन्नत्वाच्च । न च द्वितीयाया आश्रयो वाच्यः भेदो लक्ष्यः प्रकृत्यर्थस्य तादात्म्येनाश्रये आधेयतया भेदे आश्रय आधेयतया फले भेदः प्रतियोगितया व्यापारेऽन्वेतीति वाच्यम् । युगपद्वृत्तिद्वयविरोधात् भेदस्य लघुतया शक्यत्वोपपत्तौ गुरुतयाऽऽश्रयस्यैव लक्ष्यत्वापत्तेश्च । यदपि भेदे द्वितीयाया न शक्तिः किं तु द्वितीयार्थाधिकरणविशेषितफलप्रकारतानिरूपितविशेष्यतासंबन्धेन शाब्दं प्रति द्वितीयान्तार्थवृत्त्यन्योन्याभावप्रतियोगितावच्छेदकव्यापारोपस्थितिर्विशेष्यतासंबन्धेन कारणमतश्चैत्रश्चैत्रं गच्छतीत्यत्र न शाब्दबोधः । तादृशव्यापारोपस्थितिविरहादिति नव्यशाब्दिकैरुक्तम् । तदप्यसत् । द्वितीयान्तं विनापि गच्छतीत्यादौ फलप्रकारतानिरूपितव्यापारविशेष्यताकशाब्दबोधोदयात् । तत्र कृप्तसामग्र्यां द्वितीयान्तसमभिव्याहारेऽपि फलप्रकारकशा-

ब्दसम्भवादीदृशकार्यकारणभावे मानाभावात्। द्वितीयान्तसमभिव्याहारात् प्रकृत्यर्थविशेषितद्वितीयार्थस्य विशेषणतया फलेऽन्वयसम्भवाद्दर्शितकार्यतावच्छेदकस्यार्थसमाजग्रस्तत्वाच्च। किं च दर्शितकार्यकारणभावेन चैत्रश्चैत्रं गच्छतीत्यत्र शाब्दवारणेऽपि खगो भुवं गच्छति न तु स्वमित्यत्र निषेधप्रतीत्युपपत्तिर्न भवति। स्वकर्मकत्वाभावस्य विना भेदं प्रत्येतुमशक्यत्वादिति भेदस्य द्वितीयार्थत्वावश्यकत्वे तावतैव चैत्रश्चैत्रं गच्छतीत्यत्र चैत्रकर्मकत्वशाब्दासम्भवान्निष्प्रामाणिकतरो दर्शितोऽयं कार्यकारणभावः। यदि च पचतीत्यादौ भेदप्रतीतिर्निषेधमुखेनापि न भवतिगम्यादौ तु भुवं गच्छति न तु स्वमिति निषेधप्रतीत्यन्यथाऽनुपपत्त्या भेदप्रतीतिरावश्यकी तत्र भेदः फलविधया धात्वर्थः तत्र द्वितीयार्थस्याधेयत्वस्याऽन्वयः तस्य च प्रतियोगितावच्छेदकतया व्यापारेऽन्वयः संयोग इव भेदोऽपि फलविधया धात्वर्थ एव तावताऽपि न तु स्वमिति निषेधप्रतीत्युपपत्तिरिति भेदो धातोर्द्वितीयाया वा शक्य इत्यत्र विनिगमनाविरहः। न च भेदस्य फलविधया गम्यर्थत्वे भेदरूपफलत्वात् ग्रामत्वस्य कर्मत्वं स्यात् तथा च ग्रामत्वं गच्छतीति प्रयोगापत्तिरिति वाच्यम्। संयोगभेदोभयफलवतो गमिकर्मत्वात् तदुभयविरहेण ग्रामत्वस्य कर्मत्वायोगात्तथा प्रयोगानापत्तेः। न च चैत्रो ग्रामं गच्छति न तु मनुष्यमित्यत्र निषेधप्रतीत्यनुपपत्तिः। संयोगे चैत्रात्मकस्य भेदे चैत्रान्यमनुष्यस्याधेयतायाः सत्वात् तदभावप्रतीत्यसम्भवादिति वाच्यम्।

द्वितीयार्थाधेयत्वस्य संयोगसमानाधिकरणविशेषणता-सम्बन्धावच्छिन्नाधेयत्वीयस्वरूपसम्बन्धेन भेदेऽन्वयोपगमाद्दर्शितस्थले मनुष्यनिरूपिताधेयत्वस्य द्वितीयान्तार्थस्य दर्शितसम्बन्धावच्छिन्नप्रतियोगिताकमभावं बोधयता नञा निषेधप्रतीतेर्निष्प्रत्यूहत्वात् किं च भेदस्य द्वितीयार्थत्वोपगमे द्वितीयान्तपदघटितशब्दसामग्र्यां भेदोपस्थितेः सर्वत्र प्रवेशेन भिन्नविषयकप्रत्यक्षादिप्रतिबन्धकतायां गौरवं विनिगमकाभावादानन्त्यं च स्यादिति संयोगादिव्यासज्यवृत्तिफलकगम्यादिधातोर्भेदार्थकत्वे तु गम्यादिघटितशाब्दसामग्र्यामेव भेदोपस्थितेः प्रवेशेन सर्वत्राप्रवेशेन लाघवं स्यादिति विभाव्यते तदा भेदो न द्वितीयाया न वा धातोरर्थः किं तु गम्यादिफले संयोगे त्यज्यादिफले विभागे द्वितीयार्थाधेयत्वस्य व्यापारवद्भेदसमानाधिकरणत्वविशिष्टसमवायावच्छिन्नाधेयत्वीयस्वरूपसंबन्धेनान्वयोऽभ्युपेयते तत एव चैत्रश्चैत्रं गच्छतीत्यत्र न शाब्दबोधः चैत्राधेयत्वस्य दर्शितसंसर्गेण संयोगेऽयोग्यत्वात् चैत्रो ग्रामं गच्छति न तु स्वं न वा मनुष्यमित्यादौ स्वाधेयत्वस्य मनुष्याधेयत्वस्य च दर्शितसंबन्धावच्छिन्नप्रतियोगिताकोऽभावो नञा संयोगे बोध्यते अतो निषेधप्रतीतिरुपपद्यते । एवमेव चैत्रश्चैत्रं त्यजतीत्यत्र न शाब्दबोधः । न वा चैत्रो ग्रामं त्यजति न तु स्वं न वा मनुष्यमित्यत्र निषेधप्रतीत्यनुपपत्तिर्द्वितीयमभिनवा रीतिः सुधीभिराकलनीयेति । । एवं कर्माख्यातस्य फलान्वितमधिकरणत्वमर्थः । न च द्वितीयापर्यायत्वानुपपत्तिरिति वाच्यम् । अधिकरणत्वा-

धेयत्वयोः समानसंवित्संवेद्यतया कर्मत्वशब्दप्रतिपाद्यत्वात् कर्मत्वार्थकतया द्वितीयाकर्माख्यातयोः पर्यायत्वसम्भवात् । न चैवं कर्माख्याते फलान्विताधेयत्वस्यानभिधानाद् द्वितीयाप्रसङ्ग इति वाच्यम् । फलान्विताधिकरणत्वतद्धेतोरन्यतरानभिधानस्यैव द्वितीयाप्रयोजकत्वात् तयोरन्यतरबोधकशब्दासमभिव्याहृते द्वितीयार्थान्वययोग्यार्थके पदे सति द्वितीया भवतीत्यस्योक्तत्वात् । एवं चैत्रेण ग्रामो गम्यते इत्यादावेकचैत्रकर्तृकव्यापारजन्यसंयोगाधिकरणतावानेकग्राम इत्यन्वयबोधः ।

कर्माख्यातस्थले तृतीयार्थकर्तृत्वं व्यापारे व्यापारः फले फलं तिङर्थाधिकरणत्वे तिङर्थः प्रथमान्तार्थेऽन्वेतीति । अत्रापि चैत्रेण ग्रामो गम्यते न तु स्वात्मा न वा मनुष्य इति निषेधप्रतीत्यनुरोधेन कर्माख्यातस्य भेदोऽप्यर्थः । स्वावच्छिन्नप्रतियोगिताकत्वसंबन्धेन व्यापारो भेदे भेदो विशेषणतया प्रथमान्तार्थेऽन्वेति । तथा च तादृशसंयोगाधिकरणतावान् व्यापारावच्छिन्नप्रतियोगिताकभेदवानेकग्राम इत्यन्वयबोधः । संयोगविशिष्टविशेषणता भेदस्य संसर्गः तादृशविशेषणतासंसर्गावच्छिन्नप्रतियोगिताकस्य व्यापारावच्छिन्नप्रतियोगिताकभेदाभावस्य स्वात्मनि मनुष्ये च सत्वान्निषेधप्रतीतिरुपपद्यते । अभिनवरीतौ तु संयोगफलकगम्यादिना विभागफलकत्यज्यादिना च समभिव्याहृतस्य कर्माख्यातस्यार्थोऽधिकरणत्वं व्यापारवद्भेदसमानाधिकरणत्वविशिष्टसमवायावच्छिन्नाधिकरणत्वीयस्वरूपसंबन्धेन प्रथमान्तार्थेऽन्वेति । चैत्रेण ग्रामो गम्यते न तु स्वात्मा न वा मनुष्य इत्यत्र

गम्यर्थफलसंयोगान्वितं तिङर्थाधिकरणत्वं दर्शितसंस-र्गेण ग्रामे निराबाधमिति तस्य ग्रामेऽन्वयो भवति तस्य तु दर्शितसंसर्गावच्छिन्नप्रतियोगिताकोऽभावः स्वात्मनि मनुष्ये च निराबाध एव स्वात्मनि दर्शितसंसर्गेण मनु-ष्यान्तरे स्वरूपसंबन्धेनापि चैत्रकर्तृकव्यापारजन्यसंयो-गाधिकरणत्वस्यासत्वादिति निषेधप्रतीत्युपपत्तिरिति । एतेन तिलं जुहोति न तु वन्हिमित्यादौ भेदस्य द्वितो-यार्थत्वाभ्युपगमेऽपि निषेधप्रतीत्यनुपपत्तिः वन्हिसंयो-गफलकविहितव्यापारार्थकस्य जुहोतेः फले वन्हिसंयोगे वन्हिसमवेतत्वस्य वन्हौ व्यापारवद्भेदस्य च सत्वात् न च वन्हौ जुहोतिकर्मत्वमिष्टमेवात एव "यथाविधिहुता-ग्नीनामि"त्यत्र हुतशब्दार्थस्य हवनकर्मणस्तादात्म्यमग्नौ प्रतीयते एवं "जटाधरस्सन् जुहुधीह पावकमि"त्यत्र द्वि-तीयान्तार्थस्य वन्हिकर्मत्वस्य जुहोत्यर्थेऽन्वय इति वन्हि-कर्मत्वस्य निषेधो हवनेऽयोग्यतया न प्रत्येतुं योग्य इति वाच्यम् । हुताग्नीनामित्यत्र पावकं जुहुधीत्यत्र च संयो-गफलकस्वाहाकरणकप्रक्षेपार्थकतया जुहोतेः कर्मप्रत्य-यनिष्ठद्वितीयोपपत्तेः । न च जुहोतेः संयोग एव फलं न तु वन्हिसंयोग इति वाच्यम् । तथासति वन्हि घृतं जुहोतीति प्रयोगापत्तेः एवं पार्थिवद्रव्यप्रतियोगिकक-ण्ठसंयोगफलकव्यापारार्थकस्य भुजेर्योगे इव द्रव्यप्रति-योगिककण्ठसंयोगफलकव्यापारार्थकस्य पिबतेर्योगे ओ-दनं भुङ्क्ते न तु कण्ठं पयः पिबति न तु कण्ठमित्यत्रापि निषेधप्रतीत्यनुपपत्तिः भुजिपिबतिफलयोर्व्यापारवद्भेद-स्य च कण्ठे सत्वात् । एवं प्राणवियोगफलकव्यापारा-

र्थकस्य हन्तेर्योगे शत्रुं हन्ति न तु प्राणमित्यत्रापि निषेधप्रतीत्यनुपपत्तिः प्राणवियोगस्वरूपफलस्य व्यापारवद्वृत्तेस्य च प्राणे सत्वात्। एवं यवो हूयते न तु वह्निः ओदनो भुज्यते न तु काष्ठः पयः पीयते न तु काष्ठः शत्रुर्हन्यते न तु प्राणा इत्यादिकर्माख्यातेऽपि निषेधप्रतीत्यनुपपत्तिरिति परास्तम्। अभिनवरीत्या जुहोत्यर्थफले वह्निसंयोगे वह्निभेदावच्छिन्नसमवायावच्छिन्नाधेयत्वीयस्वरूपसंसर्गेण भुज्यर्थे पिबत्यर्थे च फले काष्ठभेदावच्छिन्नसमवायावच्छिन्नाधेयत्वीयस्वरूपसंसर्गेण हन्त्यर्थे फले प्राणभेदावच्छिन्नसमवायावच्छिन्नाधेयत्वीयस्वरूपसंसर्गेण द्वितीयार्थाधेयत्वस्यान्वयोपगमात्। तत्तत्संसर्गावच्छिन्नप्रतियोगिताका वह्न्याधेयत्वस्याभावो जुहोत्यर्थफले निराबाध इति निषेधप्रतीत्युपपत्तेः दर्शितसंसर्गावच्छिन्नप्रतियोगिताकस्य काष्ठाधेयत्वाभावस्य भुज्यर्थे पिबत्यर्थे च फले सत्वात् दर्शितसंसर्गावच्छिन्नप्रतियोगिताकस्य प्राणाधेयत्वाभावस्य हन्त्यर्थफले सत्वान्निषेधप्रतीत्युपपत्तेः। एवं दर्शितसंसर्गे आधेयत्वस्थानेऽधिकरणत्वं निवेश्यं कर्माख्यातार्थाधिकरणत्वस्य फलान्वितस्य तेन संसर्गेण प्रथमान्तार्थेऽन्वयोपगमात् तत्संसर्गावच्छिन्नप्रतियोगिताकः फलान्वितस्याधिकरणत्वस्याभावो नञा प्रथमान्तार्थे बोध्यत इति निषेधप्रतीत्युपपत्तिरित्यादिकं सुधीभिः स्वयमूहनीयमिति धातोः फलव्यापारोभयवाचितावादिनां मतनिष्कर्षः।

प्राञ्चस्तु धातोर्व्यापार एवार्थः फलं द्वितीयार्थः कर्माख्यातस्यापि फलमर्थः एवं द्वितीयाकर्माख्यातयोः पर्या-

यत्राऽपि स्पष्टा अनभिहिते इत्यनेन फलानभिधानस्यैव द्वितीयाप्रयोजकत्वमावेद्यते सकर्मकत्वं तु पूर्ववत् द्वितीयासाकाङ्क्षत्वम्भि तत्र द्वितीयाऽऽकाङ्क्षाप्रयोजको धर्मः गमित्यजिपच्यादीनां फलान्वितव्यापारानादितात्पर्यकत्वं तद्विरहादेव व्यापारमात्रार्थकानां स्यन्दयतिप्रभृतीनां न द्वितीयाऽऽकाङ्क्षा अतो ग्रामं स्यन्दते सुखं यतत इति न प्रयोगः शीङादेरधिपूर्वकत्वं वसश्चोपादिपूर्वकत्वं तथा । तत्राधिकरणत्वमाधेयत्वं वा द्वितीयार्थः पूर्वोक्ताकर्मकत्वेन व्यवह्रियमाणानां णिजन्तत्वं तथा तत्राणिजन्तधात्वर्थकर्तृत्वं द्वितीयार्थः गतिबुध्यशनार्थकानां शब्दकर्मकाणां च णिजन्तानां च फलमणिजन्तधात्वर्थकर्तृत्वं च द्वितीयार्थः अधिकरणविशेषितफलविशिष्टव्यापारवाचकाः शब्दायत्यादयः फलसमानाधिकरणव्यापारवाचका रमत्यादयश्चात्रापि मते तथैव तत्र फलस्य धातुनोक्तत्वादुक्तार्थानामप्रयोग इति न्यायान्न फलार्थकद्वितीयाप्रसङ्गः । ननु गमित्यज्योर्व्यापारमात्रार्थकत्वे पर्यायत्वं स्यात् न च तदर्थार्थकत्वं तत्पर्यायत्वं स्वार्थव्यापारार्थकत्वं त्यजिगम्योः परस्परं तद्दिष्टमेति वाच्यम् । तथा सति त्यागे वक्तव्ये गमनमिति गमने वक्तव्ये त्याग इति च प्रयोगप्रसङ्गादिति चेन्न । गमेः संयोगान्वितव्यापारानादितात्पर्यकत्वात् त्यजेर्विभागान्वितव्यापारानादितात्पर्यकत्वात्तथाप्रयोगप्रसङ्गविरहात् । न चैवं त्यजिगम्योस्तथातात्पर्यावधारणे त्यजतिगच्छतीत्यादौ त्यजनं गमनमित्यादौ च धातोर्व्यापारमात्रबोधने तात्पर्यविरहेण कर्मप्रत्ययाभावेन फलबो-

॥ श्रीः ॥

# विज्ञप्तिः ।

---

१ अस्यां चौखम्बा-संस्कृतग्रन्थमालायां प्रतिमासं पृष्ठशतके सुन्दरैः सीसकाक्षरैरुत्तमेषु पत्त्रेषु एकः स्तवको मुद्रयित्वा प्रकाश्यते ।

२ एकस्मिन् स्तबके एक एव ग्रन्थो मुद्र्यते ।

३ प्राचीना दुर्लभाश्चाऽमुद्रिता मीमांसावेदान्तादिदर्शन, व्याकरण, धर्मशास्त्र, साहित्य, पुराणादिग्रन्था एवात्र सुपरिष्कृत्य मुद्र्यन्ते

४ काशिकराजकीयप्रधानसंस्कृतपाठालयाऽध्यापकाः पण्डिता अन्येच्च शास्त्रदृष्टयो विद्वांसः एतत्परिशोधनादिकार्यकारिणो भवन्ति ।

५ भारतवर्षीयै ब्रह्मदेशीयैः, सिंहलद्वीपवासिभिश्च एतद्ग्राहकैर्देयं वार्षिकमग्रिमं मूल्यम् मुद्राः ७ आणकाः ८

६ कालान्तरे प्रतिस्तबकं " " १ " ०

७ प्रापणव्ययः पृथग् नास्ति ।

८ साम्प्रतं मुद्र्यमाणा ग्रन्थाः- मुद्रिताः स्तवकाः

(१) संस्काररत्नमाला । गोपीनाथभट्टकृता ( संस्कारः ) २

(२) शब्दकौस्तुभः । भट्टोजिदीक्षितकृतः ( व्याकरणम् ) १०

(३) श्लोकवार्तिकम् । भट्टकुमारिलविरचितम् पार्थसारथिमिश्रकृत-न्यायरत्नाकराख्यया व्याख्यया सहितम् सम्पूर्णम् । ( मीमांसा ) १०

(४) भाष्योपबृंहितं तत्त्वत्रयम् विशिष्टाद्वैतदर्शन प्रकरणम् श्रीमल्लोकाचार्य्यप्रणीतम् । श्रीनारायणतीर्थ विरचित भाट्टभाषा प्रकाश सहितम् । ( वेदान्तः ) २

(५) करणप्रकाशः । श्रीब्रह्मदेवविरचितः सम्पूर्णः ( ज्योतिषः ) १

भाट्टचिन्तामणिः महामहोपाध्यायः श्रीगागाभट्ट विरचितः । तर्कपादः ( मीमांसा ) २

न्यायरत्नमाला-श्रीपार्थसारथिमिश्रविरचिता सम्पूर्णः । (मीमांसा) २

ब्रह्मसूत्र भाष्यम्-वादरायण प्रणीत वेदान्त सूत्रस्य यतीन्द्र श्रीमद्विज्ञानभिक्षु कृत व्याख्यानम् । ( वेदान्त ) ५

स्याद्वादमञ्जरी-मल्लिषेणनिर्मिता । ( जैनदर्शनम् ) २

) सिद्धित्रयम्-विशिष्टाद्वैत-ब्रह्मनिरूपणपरम्-श्रीभाष्यकर्तां परमगुरुभिः श्री ६ यामुनमुनिभिर्विरचितम् । (वेदान्त) १

) न्यायमकरन्दः । श्रीमदानन्दबोधभट्टारकाचार्यसंग्रहीतः आचार्यचित्सुखमुनिविरचित व्याख्योपेतः ( वेदान्तः ) १

(१२) विभक्त्यर्थनिर्णय-न्यायानुसारिप्रथमादिसप्त विभक्तिविस्तृतविचाररूपः श्रीगिरिधरभट्टाचार्य्यरचितः । ( न्यायः ) १

पत्त्रादिप्रेषणस्थानम्
कार्याध्यक्षः-हरिदासगुप्तः,
चौखम्बा-संस्कृतपुस्तकालयस्य